तदेवं क्षणिको धर्मो जन्यो भोगप्रदायकः ।
नित्यं ब्रह्म न जन्यं वा न भाव्यं मोक्षदायकम् ॥३४८॥

तस्मान्नैवास्त्यभिप्रेतः क्रमः कोऽपि निरीहयोः ।
अन्योन्यं धर्ममीमांसा–ब्रह्मजिज्ञासयोः क्वचित् ॥३४९॥

धर्मज्ञानस्य सम्बन्धो ब्रह्मज्ञानेन कश्चन ।
'नैवास्ती'त्यवबोधाय द्वैविध्यं राजते श्रुतौ ॥३५०॥

या श्रुतिः प्रेरयत्यस्मान् विधये धर्मकर्मणाम् ।
तत्र प्रयोज्यता भाति द्वयोर्वै कर्तृकर्मणोः ॥३५१॥

'स्वर्गकामो यजेते'ति श्रुतिरत्र निदर्शनम् ।
यत्र प्रवर्त्यते कर्ता कर्म चापि पृथक् पृथक् ॥३५२॥

स्वर्गकामः प्रयोज्योऽस्ति तत्र कर्ता सुखैषणः ।
प्रयोज्यं कर्म सोमादि, श्रुतिश्चास्ति प्रयोजिका ॥३५३॥

यया तु ज्ञायते ब्रह्म न हि तत्रावलोक्यते ।
प्रयोज्यः कोऽपि कर्ता वा प्रयोज्यं कर्म वा पृथक् ॥३५४॥

'अयमात्मा परं ब्रह्म'–श्रुतिरत्र निदर्शनम् ।
यत्र कर्ताऽथवा कर्म प्रयोज्यं नास्ति किञ्चन ॥३५५॥

इत्थं प्रमाणभूतानां श्रुतीनामपि भेदतः ।
धर्मज्ञानेन सम्बन्धो ब्रह्मज्ञानस्य वार्यते ॥३५६॥

( निष्कर्षः )

अतो यस्त्वथशब्दोऽयमानन्तर्यस्य वाचकः ।
न स ज्ञानं विधानं वा धर्मस्येषत् समीहते ॥३५७॥

यस्यानन्तर्यमत्रास्ति ब्रह्मजिज्ञासयेहितम् ।
नवकं तत्समासेन प्रागेवास्त्यनुकीर्तितम् ॥३५८॥

तदित्थमथशब्दस्य वाच्यार्थं शङ्करोदितम् ।
अनूद्याभिमतार्थो मे पुनरप्यनुगद्यते ॥३५९॥

यतो हि भगवानाद्यो वेदव्यासो महामुनिः ।
पातञ्जलं योगशास्त्रं व्याचख्यौ परमादरात् ॥३६०॥

ततश्च रचयामास ब्रह्मसूत्राण्यमून्यसौ ।
अतो हि तस्यानन्तर्यमथशब्देन सोऽभ्यधात् ॥३६१॥

अज्ञात्वा सांख्यसिद्धान्तमज्ञात्वा योगदर्शनम् ।
अज्ञात्वा चेतराण्यत्र दर्शनान्यमलात्मनाम् ॥३६२॥

श्रुतिषुस्तूयमानं तत् परं ब्रह्म सनातनम् ।
नाऽवगन्तुं न वा मन्तुं न वा ध्यातुं प्रभूयते ॥३६३॥

तस्मादादौ परिज्ञेयं सांख्यानां मतमुत्तमम् ।
तदन्वितस्ततो योगो योगभाष्यं तथैव च ॥३६४॥

पश्चादुपनिषत्सूक्तः सद्ब्रह्मादिपदोदितः ।
पदार्थो ब्रह्मसूत्राणां साहाय्येनावबुध्यताम् ॥३६५॥

साहाय्याद् ब्रह्मसूत्राणां सद्ब्रह्मादिपदोदितम् ।
श्रौतं ब्रह्म परिज्ञाय कृतकृत्यो भवेद् बुधः ॥३६६॥

स सांख्ययोगयुक्तात्मा समाधिस्थः शनैः शनैः ।
मननाच्च निदिध्यासाद् ब्रह्म साक्षात्करोत्यपि ॥३६७॥

जाते समाधिभङ्गे तु स श्रौतब्रह्मरूपवित् ।
मन्त्रोक्तानामृगुक्तानां पदार्थानां विनिर्णये ॥३६८॥

प्रयतेत; यतो मूलं श्रुतीनां विविधात्मनाम् ।
तथोपनिषदामासामृचो मन्त्राश्च केवलम् ॥३६९॥

मन्त्राणां च ऋगादीनां गूढार्थस्य प्रकाशने ।
[1]प्रवृत्तान्येव भासन्ते ब्राह्मणारण्यकानि नः ॥३७०॥

ब्राह्मणारण्यकोक्तानां पदार्थानां प्रतीतये ।
प्रवृत्तानीव चाभान्ति कल्पसूत्राण्यनेकधा ॥३७१॥

कल्पसूत्रेषु चैतेषु ब्राह्मणेषु च योदियात् ।
शङ्का, तां वारयत्येषा मीमांसा जैमिनेर्मता ॥३७२॥

तदित्थं ब्रह्मसूत्राणां साहाय्येन तु बुद्धिमान् ।
ज्ञात्वोपनिषदुक्तार्थं मन्त्रार्थज्ञो भवेद् द्रुतम् ॥३७३॥

मन्त्रार्थज्ञानवेलायां ब्राह्मणारण्यकाश्रयम् ।
लभमानश्च मीमांसामाश्रयेदादरादसौ ॥३७४॥

मन्त्रार्थज्ञश्च विज्ञाय ब्रह्मणो रूपमद्भुतम् ।
भावाभावस्वरूपेण, विज्ञानाय प्रकल्पते ॥३७५॥

सगुणस्यातिसूक्ष्मस्य ज्ञात्वा भावात्मनः प्रभोः ।
स्वरूपं स समग्रस्य जगतस्तनुते शिवम् ॥३७६॥

तस्माद् भौतिकभावानां विज्ञानं चेद् बुभुत्सितम् ।
मन्त्रार्थज्ञानसाहाय्यकारि ब्रह्मैव बुध्यताम् ॥३७७॥

सांख्ययोगादिशास्त्राणां परिज्ञानादनन्तरम् ।
जिज्ञासयैव तद् ब्रह्म परिज्ञातुं च शक्यते ॥३७८॥

१. "प्रवृत्तानीव," इति पाठान्तरम् ।

तस्माद् यो ब्रह्मसूत्रादावथशब्दः समीरितः ।
स योगदर्शनज्ञानानन्तरत्वस्य वाचकः ॥३७९॥

इत्यथार्थमनेकोक्तमुपसंहृत्य सादरम् ।
द्वितीयो मुनिभिः प्रोक्तो ह्यतःशब्दो विविच्यते ॥३८०॥

॥ इत्यथपदार्थनिरूपणम् ॥

---

॥ अथातःपदार्थनिरूपणम् ॥

( तत्र श्रीमच्छङ्करवल्लभाः )

अतःशब्दस्य वाच्यार्थनिर्णये तु महाप्रभुः ।
वल्लभो नातिचक्राम शङ्कराचार्यसम्मतिम् ॥३८१॥

हेत्वर्थको ह्यतःशब्दो बभाषे गुरुणाऽमुना ।
तदर्थकत्वमेवास्य स्वीचक्रे वल्लभैरपि ॥३८२॥

"यथैव क्षीयते लोकः कर्मभिश्च चितो जितः ।
तथैव क्षीयते लोकः परः पुण्यैश्चितो जितः" ॥३८३॥

इत्यर्थकं समुद्धृत्य वचनं वैदिकं गुरुः ।
अनित्यफलतां व्याख्यद्-अग्निहोत्रादिकर्मणाम् ॥३८४॥

"ब्रह्मवित् परमाप्नोती"-त्युक्त्वा चोवाच साधनम् ।
परस्य पुरुषार्थस्य ब्रह्मज्ञानं परात्परम् ॥३८५॥

यतो हि कर्मभिर्लभ्यं फलं द्रागेव नश्यति ।
ब्रह्मज्ञानफलं चेदं न कदाचिद् विनश्यति ॥३८६॥

तस्मादनित्यफलकं त्यक्त्वा कर्म शुभाशुभम् ।
कर्तव्या ब्रह्मजिज्ञासा या हि साध्या शमादिभिः ॥३८७॥

इत्यर्थव्यञ्जनार्थोऽयमतःशब्दः समीहितः ।
यथा श्रीशङ्कराचार्यैस्तथा श्रीवल्लभैरपि ॥३८८॥

"कर्मादिभ्यो ज्ञानमेव पुरुषार्थस्य साधनम् ।
इत्यतस्तस्य ज्ञानाय विचारः (अधि) क्रियते," इति ॥३८९॥

'अतःशब्दार्थः,' इत्युक्तं वल्लभैरणुसंज्ञके ।
स्वीये भाष्ये, न चाधिक्यं किञ्चिदत्र विलोक्यते ॥३९०॥

अनधीत्यापि मीमांसां ब्रह्मज्ञाने द्विजोत्तमः ।
भवत्येवाधिकारीति ध्वन्यते च तदाशयः ॥३९१॥

( अत्र श्रीमद्रामानुजाचार्याः )

रामानुजाचार्यवराः किञ्चिदत्र विलक्षणम् ।
ध्वनयन्ति निजे भाष्ये यदतःशब्दसंगतम् ॥३९२॥

साङ्गान् सशिरसो यावन्न वेदानधिगच्छति ।
अल्पास्थिरफलत्वं तन्न तावद् वेत्ति कर्मणाम् ॥३९३॥

साङ्गान् सशिरसो वेदान् अधीत्यैव द्विजोत्तमः ।
अल्पास्थिरफलत्वं तत् कर्मणामधिगच्छति ॥३९४॥

तदनन्तरमेवास्य ज्ञातसारस्य कर्मणाम् ।
[1]स्थिरानन्तफलब्रह्मज्ञानेच्छायां रतिर्भवेत् ॥३९५॥

---

१. 'भूर्यनन्तफलब्रह्मज्ञानेच्छायाम्" इति पाठान्तरम् ।

तस्मादादावधीत्यैव साङ्गान् सशिरसस्तथा ।
सर्वान् वेदाँस्ततः कार्या जिज्ञासा ब्रह्मणो बुधैः ॥३९६॥

एवं रामानुजाचार्यैः श्रीमद्भिः स्थिरबुद्धिभिः ।
वृत्तस्य हेतुभावेऽसावतःशब्दो निरूपितः ॥३९७॥

( अथातःशब्दार्थे स्वमतम् ॥ )

वस्तुतस्त्वथशब्देन यदाऽऽनन्तर्यमुच्यते ।
न तदाऽयमतःशब्दो वक्तव्यो हेतुवाचकः ॥३९८॥

व्यवहारे हि दृश्यन्ते परपश्चादनन्तराः ।
एकार्थका, यथा चैत्रात् परः पश्चाच्च माधवः ॥३९९॥

अनन्तरं माधवश्च चैत्रादित्यपि चोच्यते ।
येनाऽव्याहतमेतेषां दिक्शब्दत्वं प्रतीयते ॥४००॥

दिक्शब्दयोगे पञ्चम्याः [1]शास्त्रमस्ति प्रवर्तकम् ।
अनन्तरार्थकश्चाथशब्दो दिक्शब्द एव सः ॥४०१॥

तस्मात्तद्योगमापन्नाद् 'एतस्माद्' इत्यतः पदात् ।
परः प्रवृत्तोऽस्ति तसिल् [2]पञ्चम्यास्तसिलित्यतः ॥४०२॥

अयमेवाथशब्दस्य गमकः प्रत्ययस्तसिल् ।
आनन्तर्यार्थवाचित्वे, श्रूयते यस्त्वतःपदे ॥४०३॥

एतच्छब्देन कोऽप्यर्थो बुद्धिस्थः परिगृह्यते ।
तसिलाऽवधिसामान्यमुच्यते द्योत्यतेऽथवा ॥४०४॥

---

१. "अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" इति (२।३।२९)

२. (५।३।७).

ततोऽथशब्देनैतेनोत्तरकालिकसम्भवः ।
भाष्यते, यस्य सम्बन्धो ब्रह्मजिज्ञासया सह ॥४०५॥

'एतत्पदार्थावधिकोत्तरकालप्रवर्त्तिनी ।
तेनेयं ब्रह्मजिज्ञासे '–त्यर्थः सूत्रस्य रोचते ॥४०६॥

कोऽयं बुद्धिस्थितश्चार्थो ब्रह्मसूत्रकृतः प्रभोः
यस्यार्थे सर्वनामैतद्–एतदस्ति प्रयोजितम् ॥४०७॥

इति चेदुच्यते श्रीमन् विनयाद्, अवधार्यताम् ।
अस्ति पातञ्जले योगे भाष्यं तत् सूत्रकृत्कृतम् ॥४०८॥

समाप्य भाष्यं भगवान् वेदव्यासो महामुनिः ।
पातञ्जलस्य योगस्य, ब्रह्मसूत्राणि निर्ममे ॥४०९॥

समीपतरवर्तित्वादेतदेव मुनीश्वरः ।
बुद्धौ कृत्वा तदर्थं च–एतच्छब्दं प्रयुक्तवान् ॥४१०॥

द्रष्टृदृश्यप्रभेदेन द्वैतं योगे प्रतिष्ठितम् ।
तद्द्वैतमण्डनायैव व्यासः सूत्राण्यसूत्रयत् ॥४११॥

'[1]एतेन योगः प्रत्युक्तः,' इति सूत्रेण स स्वयम् ।
योगस्य पूर्वभावित्वं व्यञ्जयामास बादरिः ॥४१२॥

योगदर्शनभाष्यस्य यः कर्ता विश्रुतः क्षितौ ।
स एव ब्रह्मसूत्राणां कर्ता व्यासो न संशयः ॥४१३॥

योगदर्शनभाष्यस्य कर्ताऽन्यो बादरायणात् ।
प्रणेतुर्ब्रह्मसूत्राणामिति पक्षस्तु न स्थिरः ॥४१४॥

---

१. (ब्र २।१।३)

वादाद् वादा जनिष्यन्ते ह्यन्तं यास्यति जीवितम् ।
तथापि स्थिरतां नैव पक्ष एष प्रयास्यति ॥४१५॥

व्यासव्यक्तिद्वयस्यात्र स्वीकारे तूभयोः पृथक् ।
देशकालादि निर्देश्यं निर्देष्टव्यं ध्रुवं भवेत् ॥४१६॥

कदाचिदुभयोर्भेदः स्वीक्रियेतापि तुष्टये ।
तथाप्यतःपदस्थेन योग [1]एवैतदोच्यते ॥४१७॥

योगस्यैवास्ति सम्बन्धो ब्रह्मज्ञानेन सुस्थिरः ।
न परिज्ञायते ब्रह्म योगसाधनमन्तरा[2] ॥४१८॥

तस्मात् पूर्वावधीकृत्य योगभाष्यार्थचिन्तनम् ।
तदुत्तरक्षणैः कार्या जिज्ञासा ब्रह्मणो बुधैः ॥४१९॥

अनूद्यैवमतःशब्दे विचारान् भाष्यकृत्कृतान् ।
स्वमतं च, ततो ब्रह्मजिज्ञासार्थो वितन्यते ॥४२०॥

॥ इति – अतः पदार्थनिर्वचनम् ॥

---

## ॥ अथ ब्रह्मजिज्ञासापदार्थनिरूपणम् ॥

अत्र ब्रह्मपदार्थः प्रागू जिज्ञासार्थस्ततः परम् ।
ततस्तयोश्च सम्बन्धो निर्णेतव्यतया स्थितः ॥४२१॥

### ( अत्र श्रीमद्वल्लभाचार्याः )

तत्र श्रीवल्लभाचार्या ब्रह्मेत्येतत्पदेन तु ।
वाच्यान् संग्राहयामासुर्वेदान्तानथवा श्रुतीः ॥४२२॥

---

१. एतदा=एतच्छब्देनेत्यर्थः ।

२. तथा हि– ' योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति " गीता ॥

तथा हि–" वेदान्तानां विचार आरम्भणीयो न वेति "। " हरिः स्वयं व्यासो विचारं चिकीर्षुस्तत्कर्तव्यतां बोधयति ब्रह्मजिज्ञासा कर्तव्येति "। " इदं च वेदान्तविचार-व्यतिरेकेण न भवतीति "। " निर्धारिते तु वेदान्ते विचारो व्यर्थ एव "। " नहि वेदविचारस्य वेदाधि-कार्यतिरिक्तः शक्यते कल्पयितुम् "॥ ( इत्यणुभाष्यम् )

न हि ते श्रुतिसंवेद्यं गीयमानं पुरातनैः ।
तत्त्वं ब्रह्मपदस्यात्र वाच्यमर्थमवादिषुः ॥४२३॥

जिज्ञासेतिपदस्यार्थो ज्ञातुमिच्छेति यः स्फुटः ।
सोऽपि तेषामभिप्रेतो नैव भाति मनागपि ॥४२४॥

जिज्ञासेति पदस्यात्र विचारार्थत्वमेव ते ।
स्थले स्थले स्फुटैः शब्दैरनेकैः प्रत्यपीपदन् ॥४२५॥

तथा हि–" न च ज्ञातुमिच्छा जिज्ञासा नाधिकर्तुं शक्येति वाच्यं, जिज्ञासापदस्य विचारार्थत्वात् "। " तदिच्छापूरणाय विचार आरभ्यते "। " तज्ज्ञानाय विचारोऽधिक्रियत इति "। " विचारस्यापि यथा ज्ञानोपयोगित्वं तथा वक्ष्यते "। ( इत्यणुभा. )

किञ्च ब्रह्मण इत्यत्र या षष्ठी कर्मणि श्रुता ।
तामुशन्ति स्म सम्बन्धसामान्यस्यैव वाचिनीम् ॥४२६॥

तथा हि–" शेषषष्ठी=विशेषरहितं सामान्यं शेष इति सम्बन्ध-सामान्ये षष्ठीति फलितमित्यर्थः "। (इति श्रीमदिच्छा-रामभट्टकृतः प्रदीपः । )

ततश्च ब्रह्मशब्दोऽयं समासघटको यथा ।
सर्ववेदान्तवाक्यानां वाचको वल्लभैर्मतः ॥४२७॥

तथैवाऽयं विरोधस्य तन्निराकरणस्य च ।
संग्राहको, न तेनासौ जगत्कारणवाचकः ॥४२८॥

जगत्कारणरूपोऽर्थो न विचार्यः कदाचन ।
स्वरूपसत्तयैवैष निःसन्दिग्धः सुनिश्चितः ॥४२९॥

तथा हि—"ब्रह्मभावे ( ब्रह्मस्वरूपसत्तायां ) संदेहाभावात् । सन्दिग्धस्यैव जिज्ञास्यता ( निश्चयार्थं विचार्यता )"॥

यस्तु सन्दिग्धतां यायान्निश्चेतव्यश्च यो भवेत् ।
स एव बहुधा लोके पदार्थः सुविचार्यते ॥४३०॥

स्वरूपसत्तया सिद्धे पदार्थे च ततः कथम् ।
ज्ञानशक्तिः क्रियाशक्तिः सन्देहास्पदतां व्रजेत् ॥४३१॥

असन्दिग्धस्वरूपेऽस्मिन् न शक्त्योरपि संशयः ।
तस्मान्नैव विचार्यं तज्जगत्कारणमव्ययम् ॥४३२॥

यद् विचार्यं, विचारश्च यस्य प्रस्तूयतेऽत्र भोः ।
तद् ब्रह्मपदवाच्यं तु श्रुतिवाक्यं न चेतरत् ॥४३३॥

ततश्च "श्रुतिवाक्येषु ये विरोधाः परस्परम्[1] ।
तन्निराकरणार्थाश्च ये प्रयत्नाः पुरस्कृताः ॥४३४॥

तेषामिह तु सर्वेषां विचारः श्रुतिसङ्गतः ।
प्रारभ्यते वा क्रियते," इति श्रीवल्लभाऽऽशयः ॥४३५॥

1. "समुत्थिताः" इति शेषः ।

( अत्र श्रीमद्रामानुजाचार्यमतम् ॥ )

श्रीमद्रामानुजाचार्याः सौत्रब्रह्मपदेन तु ।
श्रुतिवाक्यान्यनादृत्य जगत्कारणमूचिरे ॥४३६॥

निरस्ता निखिला दोषा यस्मान्नित्यं स्वभावतः ।
यत्राऽनवधिकाः किञ्च विलसन्त्युत्तमा गुणाः ॥४३७॥

असंख्याऽनन्तकल्याणगुणैकनिलयो महान् ।
स एव ब्रह्मणा चात्र तैरूचे परमेश्वरः ॥४३८॥

बृहत्त्वगुणयोगेन ब्रह्मशब्दाभिधेयता ।
स्वरूपेण गुणैश्चान्यैस्तस्मिन्नेव विराजते ॥४३९॥

स एव ब्रह्मशब्दस्य मुख्योऽर्थः परमेश्वरः ।
सर्वेश्वरः स भगवान् परमः पुरुषोत्तमः ॥४४०॥

तस्मादन्यत्र यत्रापि गुणलेशानुबन्धतः ।
प्रयुक्तो ब्रह्मशब्दः स्यादौपचारिक एव सः ॥४४१॥

तापत्रयातुरैर्यश्च जिज्ञास्यः परमेश्वरः ।
स एव कर्मभूतोऽर्थो जिज्ञासायां न चेतरः ॥४४२॥

ज्ञातुमिच्छा हि जिज्ञासा, ज्ञानमत्र तथेष्यते ।
ज्ञानस्य विषयश्चासौ ब्रह्मवाच्योऽखिलेश्वरः ॥४४३॥

'कार्या च ब्रह्मविषयज्ञानेच्छे'-ति विवक्षिते ।
'ब्रह्म ज्ञातव्यमित्युक्तं भवती'-ति च तेऽब्रुवन् ॥४४४॥

जिज्ञासेति कृदन्तस्य योगे वै '[1]कर्तृकर्मणोः ।
कृती'-ति पाणिनीयेन षष्ठी चात्र प्रवर्तते ॥४४५॥

यत्तु श्रीवल्लभाचार्यैः शेषे षष्ठीरिता मुधा ।
गर्हयन्ति स्म तं पक्षं श्रीमदाचार्यपुङ्गवाः ॥४४६॥

शेषे षष्ठीं प्रयुज्यादौ पश्चाज्जिज्ञासया सह ।
सामर्थ्यविरहान्नैव समासस्यास्ति सम्भवः ॥४४७॥

आक्षेपेण च कर्मत्व-ग्रहणादभिधानतः ।
कर्मणो ग्रहणं न्याय्यमिति ते प्रत्यपादयन् ॥४४८॥

किञ्च ब्रह्मपदेनात्र यो वाच्यः पुरुषोत्तमः ।
तस्य स्वरूपबोधाय तैः प्रयेतेतरामिह ॥४४९॥

( ब्रह्मणो निर्विशेषत्वखण्डनम् )

यन्निर्विशेषचिन्मात्रं कैश्चिद् ब्रह्म निरूपितम् ।
तदेतैरप्रमेयत्वात् खण्डितं वचनासिभिः ॥४५०॥

प्रमाणानि तु सर्वाणि सविशेषं विशेषतः ।
वस्तुजातं प्रमिण्वन्ति नाऽविशेषं कदाचन ॥४५१॥

निर्विशेषस्य कुत्रापि वस्तुनो नैव सम्भवः ।
शब्देनापि न कुत्रापि निर्विशेषं निरूप्यते ॥४५२॥

प्रकृतिप्रत्ययाभ्यां हि पदमेकं प्रवर्तते ।
प्रत्ययार्थात् प्रकृत्यर्थो भिन्नश्चाभ्युपगम्यते ॥४५३॥

---

१. (पा. सू. २।३।६५)

ऋते तयोश्च संसर्ग–विशेषात्तत्पदं क्वचित् ।
निर्विशेषं कमप्यर्थं नाऽभिधातुं क्षमं भवेत् ॥४५४॥

घटादीनां विशेषाणां यत्तु व्यावर्तनान्मतम् ।
अपारमार्थ्यं विबुधैस्तच्च तैरिह खण्ड्यते ॥४५५॥

सतश्च परमार्थत्वं सिद्धं यत्त्वनुवर्तनात् ।
तत्स्वतः सिद्धमेवेति न हि साध्यतयेष्यते ॥४५६॥

सद्विशेषोऽस्ति विषयोऽनुभूतिर्विषयिण्यतः ।
नैतयोरेकतामेते स्वीकुर्वन्ति विपश्चितः ॥४५७॥

अनुभूतिस्तथा ज्ञानं संविच्चावगतिस्तथा ।
सर्वेऽप्यमी समानार्था ज्ञातुर्धर्माः सकर्मकाः ॥४५८॥

"अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषः" (इति श्रीभाष्यम्) ॥

ज्ञाताऽनुभविता नित्यः संवेद्यात्मा, न संशयः ।
संविज्ज्ञानाऽनुभूत्यादिः किन्त्वनित्या क्रिया हि सा ॥४५९॥

"नित्यं चेत्संवेदनं स्वतःसिद्धं, नित्यमित्येव प्रतीयेत, न च तथा प्रतीयते;" "इह तु सकलविषयविरहिणी निराश्रया च संविन्निषिध्यते" (इति श्रीभाष्यम्) ॥

सा क्रिया नियतं किञ्चिज् ज्ञेयं संवेद्यमेव वा ।
कर्मान्तरमपेक्ष्यैव ज्ञातुः कर्तुः प्रवर्तते ॥४६०॥

तस्मादहंपदार्थो यो ज्ञाता वेदी च वर्तते ।
निरस्ताखिलदुःखोऽसावनन्तानन्दभाक् स्वराट् ॥४६१॥

स एवाऽऽत्मा परं ब्रह्म ब्रह्मशब्देन गीयते ।
प्रथमे ब्रह्मसूत्रेऽस्मिन् ज्ञानाज् ज्ञेयाच्च यः परः ॥४६२॥

इत्येवमेकदा ज्ञानाज् ज्ञातुः संसाध्य भिन्नताम् ।
उभयोरथ नित्यत्वाद् – अभेदमपि तेऽब्रुवन् ॥४६३॥

ज्ञाता स एव भगवान् यो हि ज्ञानगुणाश्रयः ।
नित्यत्वाच्चास्य तज् ज्ञानं नित्यमित्यब्रुवन् बुधाः ॥४६४॥

" ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम् । ज्ञानं चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यम् " ( इति श्रीभाष्यम् ) ॥

ज्ञाने च ज्ञातृतायां च भेदमुद्भास्य ते ततः ।
उभयोरेकतां प्राहुः शनकैः शङ्करोदिताम् ॥४६५॥

पश्चात्त एव धीमन्तः स्वीये भाष्ये स्थले स्थले ।
ज्ञानस्वरूपमात्मानम् – अब्रुवन् – अविशङ्किताः ॥४६६॥

" न तावता निर्विशेषज्ञानमात्रमेव तत्त्वम् । ज्ञातुरेव ज्ञा स्वरूपत्वात् । ज्ञानस्वरूपस्यैव तस्य ज्ञानाश्रयत्वं मणिद्युमणिप्रदीपा वद् युक्तमेवेत्युक्तम् " । " अस्य ज्ञानस्वरूपस्यैव ज्ञातृत्वम् " (इ श्रीभाष्यम् ) ॥

ज्ञानैकाकार एवात्मा निष्कर्मा स च निष्क्रियः ।
शोकमोहादिभिर्नैव प्राकृतैर्लिप्यते गुणैः ॥४६७॥

"आत्मातु सर्वत्र ज्ञानैकाकारतया देवादिभेदप्रत्यनीकस्वरूपः"
(इति श्रीभाष्यम्) ॥

नैवोपचीयते देवो न कदाप्यपचीयते ।
सदैकरूपस्तेनासौ ज्ञानाकारो महेश्वरः ॥४६८॥

इत्येवमेकतामुक्त्वा ज्ञाने ज्ञातरि चात्मनि ।
देह-देहीश्वरेत्युक्ताद् भेदादैहन्त ते त्रिताम् ॥४६९॥

तथा हि—"अतः शास्त्रेषु न निर्विशेषवस्तुप्रतिपादनमस्ति, नाप्यर्थ-जातस्य भ्रान्तत्वप्रतिपादनम्, नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः" (इति श्रीभाष्यम्) ॥

त्रयाणामपि वस्तूनां परीक्षा तु स्थलान्तरे ।
विधास्यतेऽत्र तु पुनः प्रकृतार्थोऽनुगम्यते ॥४७०॥

प्रकृतोऽर्थश्च विज्ञेयो ब्रह्मशब्दः समासगः ।
यत्राऽऽद्यैः शङ्कराचार्यैरुक्तं किञ्चिदनूद्यते ॥४७१॥

---

(अथ शाङ्करं मतम् ।)

तत्त्वे तपसि वेदे च विधौ विप्रे प्रजापतौ ।
प्रयुज्यते पवित्रोऽयं ब्रह्मशब्दः पुरातनः ॥४७२॥

कतमस्मिन्नसावर्थे प्रयुक्तः प्रस्तुते तु सः ।
इति शङ्कां समाधत्ते द्वितीयेन मुनीश्वरः ॥४७३॥

'जन्माद्यस्य यतः' – सूत्रं द्वितीयमिह दृश्यते ।
यस्मिन् ब्रह्मपदार्थोऽसौ लक्षणैरस्ति लक्षितः ॥४७४॥

कश्चास्ति तत्रेति च चेद् भवतोऽस्ति कुतूहलम् ।
श्रूयतां शङ्कराचार्यमतमन्यैः स्फुटीकृतम् ॥४७५॥

तत्र श्रीभामतीकारैर्द्विधा ब्रह्म निरूपितम् ।
अनुपाधिकमेकं तद्, अविद्योपाधिकं परम् ॥४७६॥

महाकाशाद् घटाकाशो यथा लोके विभिद्यते ।
तथैवोपाधियोगेन ब्रह्मरूपं विभिद्यते ॥४७७॥

अविद्योपाधिनाऽस्पृष्टमयुक्तं मुक्तमेव यत् ।
तदेव निर्गुणं रूपं शुद्धं बुद्धं सनातनम् ॥४७८॥

अविद्योपाधिना युक्तं यत्तु रूपं निरूप्यते ।
सगुणं तच्च सर्वज्ञं सर्वशक्तिसमन्वितम् ॥४७९॥

यत्तु तत्त्वमसीत्यत्र [1]तत्पदेनाऽभिधीयते ।
उपाधिरहितं नित्यं रूपं तन्निर्गुणं परम् ॥४८०॥

यच्च तत्र महावाक्ये त्वंपदेनास्ति लक्षितम् ।
तदविद्योपाधियुक्तं सगुणं सर्वशक्तिकम् ॥४८१॥

सामानाधिकरण्याच्च तत्त्वमोः पदयोस्तयोः ।
अभेदादुभयोरैक्यं साध्यते लक्षितार्थयोः ॥४८२॥

द्विविधं वा द्विरूपं वा तदेव ब्रह्म शाश्वतम् ।
विवृणोति द्विधाभूतैः शङ्करस्तैर्विशेषणैः ॥४८३॥

---

१. "तत्पदेनास्ति लक्षितम्", इति पाठान्तरम् ।

नित्यं शुद्धं च बुद्धं च यच्च मुक्तं सनातनम् ।
तदेतत्तु परं रूपं सर्वोपाधिविवर्जितम् ॥४८४॥

सर्वज्ञं यच्च सम्प्रोक्तं सर्वशक्तिसमन्वितम् ।
तदेतदपरं रूपम् – अवच्छिन्नमुपाधिना ॥४८५॥

निरुपाधिकरूपस्य सत्त्वे स्थूलः प्रमापकः ।
अत्रोपात्तः स्वयं ज्ञेयो ब्रह्मशब्दः सुविश्रुतः ॥४८६॥

बृंहतेर्वृद्धिरूपार्थान्स्मनिन्नेव प्रवर्तते ।
व्युत्पाद्यते ततश्चायं ब्रह्मशब्दो बहुश्रुतः ॥४८७॥

यश्चातिवृद्धिमानर्थो महिम्ना यो न मीयते ।
स एव ब्रह्मशब्दार्थो निरुपाधिः सनातनः ॥४८८॥

सोपाधिकस्य रूपस्य सत्त्वे यस्तु प्रमापकः ।
अयमात्माऽहमस्मी 'ति प्रसिद्धः प्रत्ययो हि सः ॥४८९॥

अविद्योपाधिना योगान्निरुपाधिः सनातनः ।
अहंप्रत्ययवानेष जीव इत्यभिधीयते ॥४९०॥

( उपाधिविरहे जीव – व्यवहारो विनश्यति ।
तस्मान्नित्या न ते जीवा न तेषां च पुनर्भवः ॥४९१॥ )

इत्येवं शङ्कराचार्यमतव्याख्यानकोविदाः ।
ब्रह्मशब्दस्य लक्ष्यार्थमवोचन् भाष्यसङ्गतम् ॥४९२॥

न तेन विप्रवेदादेर्वाच्यार्थस्यात्र वाचकम् ।
शङ्कराचार्यचरणा ब्रह्मशब्दमवादिषुः ॥४९३॥

## ( अथ जिज्ञासापदार्थनिरूपणम् )

तादृशं ब्रह्मणो रूपं ज्ञातुमिच्छा बलीयसी ।
जिज्ञासा, सा च कर्तव्या विरक्तेन विवेकिना ॥४९४॥

उत्पन्नायामथैतस्यां जिज्ञासायां स्वभावतः ।
जिज्ञासुः श्रुतिसन्दोहं स्वयमेवादरिष्यते ॥४९५॥

समुत्पन्ने तु सन्देहे दर्शनान्तरवत् सुधीः ।
साहाय्यं ब्रह्मसूत्राणां स्वयमेवाश्रयिष्यते ॥४९६॥

तस्मादिहत्यं जिज्ञासा–पदं नैवास्ति वाचकम् ।
मीमांसाया न च श्रीमन् विचारस्य च वाचकम् ॥४९७॥

स्वया ह्यभिधया शक्त्या ज्ञानेच्छामेव केवलाम् ।
जिज्ञासेतिपदं ब्रूते ब्रह्मणा यत् समस्यते ॥४९८॥

प्राञ्चः केचिदिहाचार्याः, 'ब्रह्मणे'–पदमादिमम् ।
समासिसँश्चतुर्थ्यन्तं कृत्वा; जिज्ञासया सह ॥४९९॥

तं चतुर्थीसमासं तु ज्ञात्वा शास्त्रविसङ्गतम् ।
षष्ठीतत्पुरुषं मेने प्रशस्तमधिकं गुरुः ॥५००॥

षष्ठीतत्पुरुषेऽप्यत्र मतद्वयमजायत ।
शेषे षष्ठीमुशन्ति स्म केचित्, केचिच्च कर्मणि ॥५०१॥

शेषे षष्ठ्या तु सम्बन्धसामान्ये विदिते सति ।
'सम्बन्धः केन सामान्यो' – जिज्ञासेयमिहोदियात् ॥५०२॥

ब्रह्मसम्बन्धि यत्किञ्चिद् ब्रह्मज्ञानोपकारकम् ।
तस्य संग्राहिका श्रीमञ् शेषे षष्ठी यदीष्यते ॥५०३॥

तदा तु नितरामत्र समासो व्याकुलीभवेत् ।
षष्ठ्यन्तं नैव सम्बद्धं भवेज्जिज्ञासया सह ॥५०४॥

सम्बन्धविरहादत्र सामर्थ्यविरहो भवेत् ।
सामर्थ्यविरहाच्चैव समासोऽपि न सम्भवेत् ॥५०५॥

ब्रह्मसम्बन्धिनामत्र ग्रहणायैव किञ्च भोः ।
शेषे षष्ठीविधानं तु युक्तियुक्तं न भासते ॥५०६॥

अपादानाधिकरण – करणत्वादिकं यदा ।
विवक्षितं न हि भवेत्; षष्ठी शेषे, तदा भवेत् ॥५०७॥

शेषे षष्ठी तदित्थं भोः कारकत्वाविवक्षया ।
प्रवर्तते, न तु तया पदार्थान्तरमुच्यते ॥५०८॥

पदार्थान्तरबोधाय शेषेषष्ठ्याश्रये कृते ।
सम्बन्धद्योतनार्थाय पुनः षष्ठी ह्यपेक्ष्यते ॥५०९॥

न तथा कुत्रचिद् दृष्टः प्रयोगः शास्त्रसम्मतः ।
तस्माद् बालिशतामेषा शेषे षष्ठी प्रकाशते ॥५१०॥

किञ्च शेषपदं सूत्रे पाणिनीये प्रतिश्रुतम् ।
स्वस्वामित्वादिसम्बन्धविशेषाणां हि वाचकम् ॥५११॥

वाच्ये सम्बन्धसामान्ये शेषशब्दो न युज्यते ।
तस्मात् कात्यायनस्तस्मै प्रागणीद् वार्तिकान्तरम् ॥५१२॥

तेन शेषपदेनात्र यः सामान्यो विवक्षितः ।
सम्बन्धः सोऽपि नैवास्ति पाणिनीयेन सङ्गतः ॥५१३॥

ब्रह्मशब्दः स्वयं शक्त्या परं तत्त्वं प्रवक्ष्यति ।
स लक्षणोपचाराभ्याम् – अन्यार्थान् गमयिष्यति ॥५१४॥

तादृशाच्च ततः शब्दात् परा षष्ठीह शोभते ।
शेषे कर्मणि वा सा स्यादिति पश्चाद् विचिन्त्यताम् ॥५१५॥

मीमांसा वा विचारो वा जिज्ञासार्थोऽस्तु कश्चन ।
किन्तु कर्मानपेक्षास्ते न स्थास्यन्ति चिरं सुखम् ॥५१६॥

जिज्ञासार्थास्तु सर्वेऽपि कर्म किञ्चित् सुनिश्चितम् ।
अपेक्षिष्यन्त एवेति षष्ठी कर्मणि शोभते ॥५१७॥

ज्ञातुमिच्छा हि जिज्ञासा ज्ञानेच्छावाचिका च सा ।
ज्ञानं च विषयं कञ्चिन्नियतं स्वमपेक्षते ॥५१८॥

ब्रह्मैव विषयश्चास्य जिज्ञासोरत्र सम्भवेत् ।
विषयश्च भवेत्कर्म ज्ञानस्येष्टतमो यतः ॥५१९॥

यस्याः क्रियाया यद्वस्तु भवेदिष्टतमं त्विह ।
तस्यास्तदेव नियतं कर्म सम्पद्यते ध्रुवम् ॥५२०॥

तस्माद् 'ब्रह्मणः', इत्यत्र षष्ठी शेषे न विद्यते ।
कर्मण्येवात्र विज्ञेया षष्ठी सच्छास्त्रसम्मता ॥५२१॥

श्रीमद्रामानुजाचार्या अपि ते 'कर्तृकर्मणोः ।
कृती'ति सूत्रेण ततः षष्ठीमत्रान्वमन्वत ॥५२२॥

श्रीमद्भिर्वल्लभाचार्यैरेव शेषेऽत्र घोषिता ।
षष्ठी, शब्दत आपन्ना गौणताऽङ्गीकृताऽपि च ॥५२३॥

ब्रह्मण्यापतितो यश्च दोषोऽजिज्ञास्यतामयः ।
न च सोऽपि निराचक्रे विपरीतार्थभाषिभिः ॥५२४॥

( अत्र श्रीमद्वल्लभाचार्याणां वृत्तिभेदः )

यं यमर्थं पुरश्चक्रे पूर्वपक्षतया गुरुः ।
तं तमेव स्वसिद्धान्तं कल्पयामास वल्लभः ॥५२५॥

अधिकारार्थता याऽऽसीद् अथशब्दस्य खण्डिता ।
शङ्करैर्वल्लभाचार्यैः स्वीचक्रे सैव सूरिभिः ॥५२६॥

अतःशब्दार्थचिन्तायां नाधिकं प्राह शङ्करः ।
अतः श्रीवल्लभाचार्यास्तत्रासन् मितभाषिणः ॥५२७॥

शङ्करो ब्रह्मशब्दार्थं परं तत्त्वं यदाऽब्रवीत् ।
तदा ब्रह्मपदं मेने वल्लभः श्रुतिवाचकम् ॥५२८॥

ज्ञातुमिच्छां हि जिज्ञासां स्वीचक्रे शङ्करो यदा ।
जिज्ञासया तदाऽवोचद् विचारं वल्लभः प्रभुः ॥५२९॥

शेषे षष्ठीं यदैवाद्यः शङ्करः प्रत्युवाच भोः ।
तदाऽधिकाग्रहेणैनां वल्लभाः प्रत्यपीपदन् ॥५३०॥

तदेवं विपरीतार्थभाषिणः शङ्करोदितात् ।
सन्तोऽपि वल्लभाचार्या न नवं किञ्चिदब्रुवन् ॥५३१॥

वेदान्तवाक्यमीमांसा तर्कोपकरणा सती ।
प्रस्तूयत इति ह्यर्थः शङ्करैरप्यभाष्यत ॥५३२॥

स एवार्थस्ततो भाष्यादधिगत्य बुधोदितः ।
वल्लभैरात्मनो भाष्ये भाषया विशदीकृतः ॥५३३॥

तथापि ध्वनितं किञ्चिद् यदभिव्यज्यते नवम् ।
तदत्र केवलं ज्ञेयमधिकारिनिरूपणम् ॥५३४॥

"वेदान्तानां विचारेऽस्मिन्नधिकारोऽस्ति केवलम् ।
त्रैवर्णिकस्य, नान्यस्य शूद्रादे"रिति वल्लभाः ॥५३५॥

"मीमांसाज्ञानसम्पन्नोऽधिकारी ब्रह्मचिन्तने ।
न जैमिनीयरहितः," इति रामानुजादयः ॥५३६॥

"शमादिसाधनोपेतः सर्वोऽपि जगतीजनः ।
भवत्यत्राधिकारी"ति शङ्कराश्च बभाषिरे ॥५३७॥

(अथात्र नव्यात्ममतसङ्ग्रहः)

तदेवं ब्रह्मजिज्ञासापदार्थं शङ्करोदितम् ।
अनूद्यापि मतं किञ्चिद् मदीयं विनिवेदये ॥५३८॥

मन्मते भगवान् व्यासो यथा मान्यः प्रमाणभूः ।
तथैव भगवानाद्यो गुरुरेष पतञ्जलिः ॥५३९॥

यथा पतञ्जलिश्चैष प्रणम्यः प्राणदः सताम् ।
कपिलोऽपि तथा धीमान् भगवान् सांख्यदेशिकः ॥५४०॥

कणादगौतमौ तद्वन्मुनीशौ जैमिनिस्तथा ।
सर्वेऽप्यमी प्रमाणार्हाः सम्मानार्हा महर्षयः ॥५४१॥

नैतेषु कतमोऽप्यत्र मिथ्यावचनमब्रवीत् ।
स्वया प्रक्रियया सर्वे सत्यमर्थं समार्थयन् ॥५४२॥

उपादिशत् स भगवान् कपिलः साङ्ख्यदर्शनम् ।
यत्राऽस्तवीद् विशेषेण प्रकृतिं पुरुषं तथा ॥५४३॥

आद्योपदेष्टा योगस्य भगवान् स पतञ्जलिः ।
द्विविधं तत्त्वमादिक्षद् दृश्यं द्रष्टारमेव च ॥५४४॥

भावाभावाभिधानाभ्यां भगवन्तौ मुनीश्वरौ ।
कणादगौतमौ सत्तां प्रोचतुस्तत्त्वयोर्द्वयोः ॥५४५॥

वेदोऽपि भगवानाद्यः सर्वमान्यः सनातनः ।
त्रिपादमेकपादं च द्विविधं पुरुषं जगौ ॥५४६॥

भूतं भव्यं भवत् सर्वमेकपात् पुरुषाभिधम् ।
त्रिपाद्रूपं यदमृतं दिवि तत् पूरुषाभिधम् ॥५४७॥

एकं जन्यस्य जगतो निमित्तं निर्गुणं परम् ।
द्वितीयं तदुपादानं सगुणं सर्वशक्तिभृत् ॥५४८॥

तदित्थं द्विविधे रूपे सिद्धे तु परमात्मनः ।
व्यासः किं भगवानत्र स्वीकरोत्येकरूपताम् ॥५४९॥

किं कदाचित्क्वचिद् दृष्टमेकत्वं परमार्थयोः ।
निदानभूतयोः कार्ये – उपादाननिमित्तयोः ॥५५०॥

येन "ब्रह्मणः" इत्यत्र षष्ठ्येकवचनं पदे ।
विग्रहावसरे प्राप्ते शङ्करैरस्ति योजितम् ॥५५१॥

इति चेच्छ्रूयतामत्र व्यासोऽपि भगवान् स्वयम् ।
द्वैविध्यमेव रूपस्य स्वीकरोत्यविशङ्कितः ॥५५२॥

समाहारविवक्षायामुभयोरपि रूपयोः ।
पदे 'ब्रह्मणः' इत्यस्मिन् एकत्वं हि प्रयुज्यते ॥५५३॥

यदि स्यादविवक्षा वः समाहारस्य रूपयोः ।
तदा तु 'ब्रह्मणो'रित्थं द्वित्वमेव प्रयुज्यताम् ॥५५४॥

सत्तामात्रतया लक्ष्यं यदि तु ब्रह्म शाश्वतम् ।
तदा द्वित्वविवक्षाऽत्र सर्वथैवानपेक्षिता ॥५५५॥

रूपद्वयमिदं सूक्ष्मं यदुक्तं परमर्षिभिः ।
सत्तामात्रत्वरूपेण तयोरैक्ये न संशयः ॥५५६॥

सत्तारूपं ततो ब्रह्म तच्च द्विविधमुच्यते ।
एकं सगुणमन्यत्तु निर्गुणं निश्चलं ध्रुवम् ॥५५७॥

जिज्ञासा च तयोरत्र रूपयोर्ब्रह्मवाच्ययोः ।
कर्तव्येति च संक्षिप्तः सूत्रार्थो मे प्रकाशते ॥५५८॥

(अत्र भगवन्तो भामतीकाराः)

अत्र केचन तत्त्वज्ञा अविद्यां नाम कञ्चन ।
कल्पयित्वा महोपाधिं द्विरूपं ब्रह्म चक्षते ॥५५९॥

अविद्योपाधिना त्यक्तं निर्गुणं निष्क्रियं तु यत् ।
तदेकं ब्रह्मणो रूपं यत् परात्परमुच्यते ॥५६०॥

अनाद्यविद्यया योगात् सगुणं सक्रियं च यत् ।
तद् द्वितीयमुपादानमपरं ब्रह्म गीयते ॥५६१॥

तत्राविद्यामनिर्वाच्यामनादिं ब्रुवते च ते ।
ज्ञानोदयाच्च तद्ध्वंसमङ्गीकुर्वन्ति कोविदाः ॥५६२॥

एकत्वमद्वितीयत्वं ब्रह्मणः परमात्मनः ।
प्रख्यापयितुमेवैष यत्नश्चैषां प्रतीयते ॥५६३॥

अविद्ययैव जगतो जन्मस्थितिलयात्मिका ।
मिथ्याप्रतीतिर्जन्तूनां ज्ञानहेया प्रजायते ॥५६४॥

नेदं जगन्न चैवास्य जन्मस्थितिलयाः पुनः ।
सत्या अविद्ययैवैते कल्पिताः प्रतिभान्ति नः ॥५६५॥

एकं केवलमद्वैतं ब्रह्म सत्यं सनातनम् ।
ज्ञानरूपं, न संयुक्तं कथञ्चित्तदविद्यया ॥५६६॥

एवं कैवल्यमेकस्य ब्रह्मणः प्रतिपाद्य ते ।
वैशिष्ट्यं ब्रह्मसूत्राणां प्रथयन्त्यमितौजसः ॥५६७॥

काणादं कापिलं किञ्च पातञ्जलमपीश्वराः ।
निजेनाखर्वगर्वेण गर्हयन्ति स्थले स्थले ॥५६८॥

आद्याः श्रीशङ्कराचार्या यस्य प्रस्थापकाः पुनः ।
कस्तमेनं मतस्तम्भमुत्खनेन्मानवोऽञ्जसा ॥५६९॥

(अत्र स्वमतम्)

मयाऽल्पमतिना त्वत्र सांख्ययोगावहेलनाम् ।
सोढुमक्षममाणेन निर्भयं किञ्चिदुच्यते ॥५७०॥

यदि ह्याप्तवचाः श्रीमान् वेदव्यासो महामुनिः ।
कुतो नैवाऽऽप्तवचनो भगवान् स पतञ्जलिः ॥५७१॥

पतञ्जलिस्तु भगवान् गुरुस्थाने विराजते ।
यत्सूत्रभाष्यकरणाद् वेदव्यासोऽभवत् कृती ॥५७२॥

कथं स गुरुविद्रोहमाचरेद् वादरायणः ।
यो ब्रह्मविष्णुरूपेण कविभिः परिगीयते ॥५७३॥

यमर्थं भगवान् प्राह योगसूत्रे पतञ्जलिः ।
मन्ये तमर्थमेवासौ ब्रह्मसूत्रेषु पुष्यति ॥५७४॥

सांख्ययोगादिशास्त्राणां खण्डनप्रवणे मुनौ ।
कस्तस्मिन् निर्मलां श्रद्धामाधास्यति सुधीरधीः ॥५७५॥

तस्मान्मम तु विश्वासो यन्न योगात् पतञ्जलेः ।
[1]अन्यथार्थं कमप्यत्र व्यासश्रीः प्रत्यपादयत् ॥५७६॥

द्रष्टृदृश्यप्रभेदेन यद् द्विरूपं पतञ्जलिः ।
तत्त्वमङ्गीचकारादौ तदेतैरपि मन्यते ॥५७७॥

यमेव पुरुषं प्राह पदार्थं कपिलो मुनिः ।
तमेवाह स्वसूत्रेषु द्रष्टारं स पतञ्जलिः ॥५७८॥

यः प्रधानमथाव्यक्तं प्रकृतिः कापिले मते ।
स एव दृश्यशब्दार्थः पदार्थश्च पतञ्जलेः ॥५७९॥

दृश्यं प्रधानमव्यक्तं भावः कैश्चिदुदीर्यते ।
भावाद्भिन्नो ह्यभावात्मा पुरुषः ख्याप्यते च तैः ॥५८०॥

तत्र भावं प्रधानं वा प्रकृतिं दृश्यमेव वा ।
मन्यते जगतां व्यास आद्योपादानकारणम् ॥५८१॥

१. 'विरुद्धार्थम्', इति पाठान्तरम् ।

द्रष्टारं पुरुषं चासावधिष्ठानं महामुनिः ।
निमित्तकारणं मत्वा प्रस्तुवीत्ते त्वनेकधा ॥५८२॥

[1]प्रकृत्याख्येऽधिकरणे दृश्यते दृश्यवर्णनम् ।
[2]कार्याधिकरणे चान्त्ये साक्षाद् द्रष्टा प्रशस्यते ॥५८३॥

स्थूलस्य जगतश्चास्य द्वाविमौ कारणे यतः ।
तस्माज्जन्मादिसूत्रे तौ यतःशब्दार्थतां गतौ ॥५८४॥

याभ्यामिति पदात्तत्र तसिलस्तु विधानतः ।
यतःपदं तदुभयोः सतोरेवास्ति वाचकम् ॥५८५॥

न केवलं निमित्तेन नोपादानेन केवलम् ।
किन्तु द्वाभ्यामुपेताभ्यां कार्यजातं प्रजायते ॥५८६॥

तयोरेवोभयोरत्र विशदप्रतिपत्तये ।
ब्रह्मणोरेव जिज्ञासा कर्तव्येति विगृह्यताम् ॥५८७॥

एकत्वमद्वितीयत्वम् – ऐतरेय्यां यदुच्यते ।
तन्मिषत्प्रकृतेरन्य – मिषद्व्यावर्तनार्थकम् ॥५८८॥

निमेषोन्मेषरहित – शून्याधिष्ठानवस्तुनः ।
'नान्यत् किञ्चिन्मिषदि'ति वचनान्नास्ति खण्डनम् ॥५८९॥

---

१. "प्रकृतिश्च प्रतिज्ञासिद्धान्तानुपरोधात्" १।१।२३ इत्यादौ ।

२. "सामीप्यात्तु तद्व्यपदेशः" (४–३–९०) "दर्शयतश्चैवं प्रत्यक्षानुमाने" (४–४–२०) इत्याभ्यां सूत्राभ्याम् ॥ "ईक्षत्यादौ च पुरुषः", इति पाठान्तरम् ।

५

अधिष्ठानतया कार्यें यन्निमित्तमबाधितम् ।
भावाद् भिन्नतयाऽभाव – रूपमप्येतदस्ति सत् ॥५९०॥

अधिष्ठितमुपादानमपरं यत्तु जायते ।
तद् भावरूपं सर्वत्र स्तूयते सांख्ययोगयोः ॥५९१॥

( प्रसङ्गादविद्याविचारः )

अविद्यानामकं तत्त्वं किञ्च यत् ख्याप्यते बुधैः ।
तत् किं द्रव्यं गुणो वास्ति क्रिया कस्यचिदस्ति वा ॥५९२॥

गुणत्वे वा क्रियात्वे वा यस्याऽविद्या गुणः क्रिया ।
तद् द्रव्यं नामतो वाच्यं, द्रव्यालम्बे हि ते यतः ॥५९३॥

यदि सा स्वयमेवास्ति द्रव्यरूपा तमोमयी ।
तदा किं ब्रह्मणो भिन्ना ब्रह्मरूपैव वा मता ॥५९४॥

भेदे तु स्वीकृते श्रीमन् अविद्या सा तमोमयी ।
दृश्यायां प्रकृतावेव स्वयमन्तर्भविष्यति ॥५९५॥

अभेदे च तदास्तित्वे तदीये स्वीकृते सति ।
अविद्या ब्रह्मणो रूपाद् भिद्येत न कथञ्चन ॥५९६॥

अभेदाद् ब्रह्मणः ख्याता याऽप्यस्ति ज्ञानरूपता ।
द्रागेव सा विरुध्येत न च तत् कस्यचित् प्रियम् ॥५९७॥

तस्मादद्वैतवादेऽस्मिन् सांख्ययोगौ निरामयौ ।
सत्कृत्य च पुरस्कृत्य ज्ञेयं ब्रह्म विपश्चिता ॥५९८॥

मायाऽविद्यादिभिः शब्दैः श्रुतयोऽपि सुसंगताः ।
प्रकृतिं सांख्ययोगोक्तां विशिंषन्ति विशेषतः ॥५९९॥

ता एव मायिनं प्राहुः पुरुषं तं महेश्वरम् ।
यः साङ्ख्ये प्रकृतेर्भिन्नो योगे द्रष्टा च गीयते ॥६००॥

वेदव्यासः स भगवाँस्तमेवार्थमनूचिवान् ।
सांख्ययोगविगानेन कः सत्यार्थमिहाप्नुयात् ॥६०१॥

अविद्योपाधिशब्दाभ्यां शङ्करोऽपि सुधीश्वरः ।
तमःप्रधानां प्रकृतिं ग्राहयन्निव [1]भाति मे ॥६०२॥

तस्माद् व्यासः स भगवान् अत्र ब्रह्मपदेन तु ।
प्रकृतिं पुरुषं चेति तत्त्वद्वितयमूचिवान् ॥६०३॥

ततश्च ब्रह्मजिज्ञासापदं यदिह दृश्यते ।
ब्रह्मणोरेव जिज्ञासां तदिहाभिव्यनक्ति नः ॥६०४॥

( अथ ब्रह्मसूत्रनिर्माणप्रयोजनम् । )

योगे साङ्ख्ये च कुत्रापि ब्रह्मशब्दो न विद्यते ।
प्रकृतिः पुरुषः किञ्च द्रष्टा दृश्यं प्रदृश्यते ॥६०५॥

श्रुतिषु त्वत्र सर्वासु ब्रह्मशब्दो विशेषतः ।
श्रूयते दृश्यते चापि ततः शङ्का प्रजायते ॥६०६॥

प्रकृत्यादिपदैः सांख्ये योगे दृश्यादिभिः पदैः ।
योऽर्थः प्रतीयते श्रुत्या किन्तु [2]सैवाभिधीयते ॥६०७॥

किं ब्रह्मपदवाच्योऽर्थो द्रष्टृदृश्यादिभिः पदैः ।
अनूदितोऽथवा भिन्नौ वाच्यार्थावुभयोरपि ॥६०८॥

---

१. "वर्तते", इति पाठान्तरम् । २. सोऽचि लोपे चेत्पादपूरणम्" इति सोर्लोपे वृद्धिः । "किन्त्वर्थः सोऽभिधीयते" इति पाठान्तरं वा ।

इतीमामुदितां शङ्कां लोकव्यामोहकारिणीम् ।
निराकरिष्णुर्भगवान् ब्रह्मसूत्राणि निर्ममौ ॥६०९॥

"ततश्च कपिलाचार्यः पुंस्प्रकृत्यादिभिः पदैः ।
यावर्थौ बोधयामास तावर्थौ ब्रह्मणा श्रुतिः ॥६१०॥

योगाचार्यश्च भगवान् द्रष्टृदृश्यादिभिः पदैः ।
यावर्थौ तावुभौ ब्रह्म – शब्देनोपनिषज्जगौ ॥६११॥

इत्याशयमिह स्पष्टं चिकीर्षुर्बादरायणः ।
"अथातो ब्रह्मजिज्ञासे" – त्याद्यं सूत्रमुदाहरत् ॥६१२॥

"सांख्ययोगप्रयुक्तानां पदानामर्थनिर्णयात् ।
परतो ब्रह्मशब्दार्थज्ञानेच्छे"त्ति तदाशयः ॥६१३॥

सांख्ययोगाधिगमनात् परतस्तत्त्वयोर्द्वयोः ।
स्वरूपमधिगन्तव्यं श्रुतिभिर्ब्रह्मवाच्ययोः" ॥६१४॥

इत्यर्थकं स भगवान् भृगुवल्लीनिदर्शकम् ।
'अथातो ब्रह्मजिज्ञासा' – सूत्रं प्रथममुक्तवान् ॥६१५॥

**इति प्रथमाध्यायस्य प्रथमपादस्य प्रथमसूत्रभाष्यालोचनम्**

---

## अथ द्वितीयसूत्रभाष्यालोचनं प्रारभ्यते ॥

भगवान् वरुणस्तत्र तनयं विनयान्वितम् ।
ब्रह्म ज्ञातुं मनोयत्नाननुष्ठातुमुपादिशत् ॥१॥

क्रमशस्तपसा ब्रह्म सोऽन्नं प्राणमवागमत् ।
मनो विज्ञानमानन्दं सर्वं ब्रह्मैव चागमत् ॥२॥

तदेतद् ब्रह्म संक्षेपाल्लक्षयन् बादरायणः ।
"जन्माद्यस्य यतः" – सूत्रं द्वितीयमकरोन्मुनिः ॥३॥

× × × × ×

"जन्माद्यस्य यतः" ॥ १–१–२ ॥

{ अस्य, जन्मादि, यतः, तद्, ब्रह्म.
आद्यस्य, जन्म, यतः, तद्, ब्रह्म } (इति श्रीमद्वल्लभाः)

— इति वा

(तत्रादौ श्रीमद्वल्लभाचार्याः)

अस्येत्येतत्पदेनात्र श्रीमद् – वल्लभसूरयः ।
'पुरोवर्ती प्रपञ्चोऽयं निर्दिष्टः', इति मन्वते ॥४॥

भूतैश्च भौतिकैः सर्वैर्देवदानवमानवैः ।
नभःस्थलजलौकोभिर्घटितं विस्मयान्वितम् ॥५॥

अनन्तकोटिब्रह्माण्डरूपं च यदिदं जगत् ।
दृश्यतेऽचिन्त्यरचनाचरितं सचराचरम् ॥६॥

तदेतदखिलैरार्षैः प्रमाणैः प्रमितं जगत् ।
प्रपञ्चेतिपदेनात्र ते च नः पर्यचाययन् ॥७॥

अविद्याकृतदेहादिमिथ्याध्यासेन संयुतम् ।
यदेव, स प्रपञ्चोऽस्तीत्याह चात्र प्रदीपकृत् ॥८॥

तथा हि—"प्रापञ्चिके = अविद्याकृतदेहाद्यध्यासवन्निष्ठे" इत्यपु- भाष्यप्रदीपः ॥

उत्पत्तिस्थितिभङ्गाश्च तस्यास्य जगतो यतः ।
तदेव ब्रह्म विज्ञेयं यदत्राधिकृतं पुरा ॥९॥

एवं सरलमुक्त्वाऽपि भावार्थं वल्लभः प्रभुः ।
प्राचीकटत् स्वपाण्डित्यं जन्मादिपदविग्रहे ॥१०॥

"जन्मस्थितिविनाशानां समाहारस्य वोधकः ।
जन्मादीति बहुव्रीहिस्तद्गुणज्ञापको हि यः ॥११॥

शङ्करेण पुरा प्रोचे, तत्खण्डनधिया प्रभुः ।
अतज्ज्ञानं बहुव्रीहिं ख्यापयामास वल्लभः ॥१२॥

तथ हि—"जन्मोत्पत्तिरादिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिः जन्मस्थितिभङ्गाः समासार्थः ।" (शां. भा.)

येषां भावविकाराणां जन्माऽऽद्योऽवयवः स्मृतः ।
जसन्तं वाचकं तेषां जन्मादीत्यवदत् पदम् ॥१३॥

सतश्च लुकमत्रैच्छच्छान्दसं वल्लभो जसः ।
किन्तु नैवैनया युक्त्या समतुष्यत् स बुद्धिमान् ॥१४॥

तत्र गौरवमालोक्य बहुव्रीहौ जसौ लुकि ।
'जन्म चादिश्च'ेति कृत्वा समाहारं स ऊचिवान् ॥१५॥

'प्राथम्यस्यादिशब्दोऽयं वाचकः सन्नपि स्वयम् ।
निरूप्यते यैः प्राथम्यं तेषामत्रास्ति लक्षकः ॥१६॥

पञ्चभावविकारा ये ह्यस्तिनश्यतिसङ्गताः ।
त एवादिपदेनात्र लक्ष्यन्ते द्वन्द्ववर्तिना' ॥१७॥

इत्थमुक्त्वाऽप्यसन्तुष्यँस्तत आदिपदस्य सः ।
आधाररूपसद्धर्मि – प्रपञ्चं वाच्यमभ्यधात् ॥१८॥

सत्तां विपरिणामं च वृद्ध्यपक्षयसंक्षयान् ।
ततो लक्ष्यानुवाचासौ विकारानादिशब्दतः ॥१९॥

इत्थमादिपदार्थस्य निर्णये व्यग्रचेतसा ।
स्वीकुर्वता बहुव्रीहिं पुनर्मूषकता वृता ॥२०॥

अस्तित्वादिभिरप्येतैर्विकारैर्यन्निरूपितम् ।
आदित्वं, तत् प्रपञ्चस्य जन्मन्येवास्ति सुस्थितम् ॥२१॥

तस्माद् येषां विकाराणाम् – आदिर्जन्म व्यवस्थितम् ।
तेषां भावविकाराणां जन्मादीत्यस्ति वाचकम् ॥२२॥

जन्मादीत्येकवचनश्रवणात्तु प्रदीपकृत्[1] ।
जन्मादिर्यस्य तदिति व्यगृह्णाच्छङ्करो यथा ॥२३॥

एवं श्रीशङ्कराचार्यवचनस्यानुवादतः ।
क्षुब्धचेताः पदच्छेदमन्यथाऽन्ते चकार सः ॥२४॥

---

१. "येषामिति बहुवचनं तद्गुणसंविज्ञानेन बहूनां सङ्ग्रहार्थमुक्तम्; न तु विग्रहघटकमपि । सूत्रे एकवचनस्यैव सत्त्वात् । विग्रहवाक्यं तु–'जन्म आदिर्यस्य तद्' इत्येवंरूपम् ॥' इति प्रदीपे ॥

आद्यस्य सर्वभूतानामाकाशस्यास्ति सम्भवः ।
निरूपितस्तत्त्वविद्भिर्ब्रह्मवल्ल्यां महर्षिभिः ॥२५॥

तमेवाद्यपदेनात्र गृहीत्वाऽऽकाशमव्ययम् ।
सम्भवार्थकमाह स्म, मन्ये, जन्मपदं प्रभुः ॥२६॥

आद्यस्याकाशतत्त्वस्य जन्म यस्मादुदीर्यते ।
तद् ब्रह्मेति निरुच्यान्ते समासं निरकासयत् ॥२७॥

एवमस्येति नैवास्ति षष्ठ्यन्तं तन्मते पदम् ।
न वा समस्तं जन्मादि यथा श्रीशङ्करोऽभ्यधात् ॥२८॥

किञ्चास्मिन्नपरे पक्षे जन्मशब्दो न बोधकः ।
स्थित्यादीनां विकाराणां, ये निरुक्ते निरूपिताः ॥२९॥

[1]आविर्भावतिरोभावावुभयं जन्मशब्दतः ।
वक्तुमेव परं यत्नं चकारान्ते महाप्रभुः ॥३०॥

किन्त्वेकेन विरुद्धार्थौ जन्मशब्देन तावुभौ ।
आविर्भावतिरोभावौ कथं स्यातामिहोदितौ ॥३१॥

किञ्चैतावुभयौ भावावाकाशस्याऽथवा यतः ।
सम्भवत्येष तस्येति महाञ्जागर्ति संशयः ॥३२॥

एवं शङ्काग्रहग्रस्तमानसः क्षुब्धधीरसौ ।
पुनरादिपदेनात्र समासं प्राह जन्मनः ॥३३॥

स्वीकृत्यात्र बहुव्रीहिं जन्माविर्भाववाचकम् ।
आदि मत्वा तिरोभावं बहुव्रीह्यर्थमभ्यधात् ॥३४॥

१. " मतान्तरवज्जन्मादीनां न विकारित्वं, किन्त्वाविर्भावतिरोभावावेव तथोत्तरत्र वक्ष्यते तदनन्यत्वाधिकरणे ", इति – अणुभाष्यम् ॥

अस्येत्यनेन च पुनः प्रपञ्चं प्राङ्निरूपितम् ।
निरूप्य नामलीलायास्तत्रान्तःपातमुक्तवान् ॥३५॥

एवमस्य प्रपञ्चस्य यतः सम्भवतः स्थिरौ ।
आविर्भावतिरोभावौ तद् ब्रह्मेत्यत्र लक्ष्यते ॥३६॥

तिरोभावमुपेतोऽपि प्रपञ्चोऽयं न नश्यति ।
तस्माच्च नितरां भिन्नं ब्रह्मेत्यत्र च सूच्यते ॥३७॥

जन्माद्यस्येति पदयोरेवमुक्त्वाऽणुमाशयम् ।
अनुब्रुवे 'यतः'—शब्दे विचारान् वल्लभोदितान् ॥३८॥

यत इत्यत्र यच्छब्दात् प्रवृत्ता पञ्चमी परा ।
सा चेह जायमानस्य हेतोरेवास्ति वाचिका ॥३९॥

स हेतुर्द्विविधो लोके दृष्टश्चैवानुभूयते ।
एको निमित्तमपर उपादानं तथोच्यते ॥४०॥

प्रकृतिर्जनिकर्तुर्या स हेतुरुभयात्मकः ।
तामपादानमाह स्म भगवान् पाणिनिः स्वयम् ॥४१॥

ततश्चात्र यतःशब्दे या दृष्टा पञ्चमी परा ।
किं तया द्योत्यते हेतुर्द्विविधोऽन्यतरोऽथवा ॥४२॥

निमित्तं केवलं किं वा किमुपादानमेव वा ।
किं वा द्वितयमेवात्र पञ्चमीद्योत्यतां गतम् ॥४३॥

इतीयं महती शङ्का जागर्तीह दुरुद्धरा ।
यामाचार्याः समुद्धर्तुं प्रायतन्त पुरातनाः ॥४४॥

वल्लभस्त्वत्र कर्तृत्वद्योतिनीं प्राह पञ्चमीम् ।
'यस्मादस्य च जन्मादि कर्तुस्तद् ब्रह्म' गीतवान् ॥४५॥

( अत्र मे विचारः )

उत्पत्तिस्थितिनाशाऽऽख्या व्यापारा न सकर्मकाः ।
सामानाधिकरण्येन यतः प्रसुवते फलम् ॥४६॥

यत्रैते समवेताः स्युः स कर्तैषामिति स्थितिः ।
यो हि सञ्जायते, तस्माद् – अन्यस्तस्य न कारकः ॥४७॥

जायमानो जनेः कर्ता, भिद्यते प्रकृतिस्ततः ।
तस्मान्न जायमानस्य कर्त्री प्रकृतिरिष्यते[1] ॥४८॥

यदि भूतानि जायन्ते जीवन्त्यभिविशन्ति च ।
स्वयमेव तदा तेषां कर्ताऽन्यो नैव सम्भवेत् ॥४९॥

जायमानस्तथा तिष्ठन् प्रयन् वापि स्वयं जनः ।
भूमिदण्डरथादीनि साधनानि त्वपेक्षते ॥५०॥

तिष्ठतः प्रयतो वापि साधनं, कर्तृ नोच्यते ।
तस्माद्दण्डो रथो वा न कर्ता स्थानप्रयाणयोः ॥५१॥

स्वयं भूतानि जायन्ते जीवन्तीतः प्रयन्ति च ।
किन्तु तानि ह्यपेक्षन्ते साधनं किञ्चिदुत्तमम् ॥५२॥

भगवान् वरुणस्तस्य साधनस्यैव वस्तुताम् ।
जिज्ञासितुमुपादिक्षद् भृगुं वारुणिमात्मजम्[2] ॥५३॥

---

१ जनिकर्तुः प्रकृतिरित्यत्र प्रकृतिशब्दो न कर्तृवाचीत्यर्थः ॥

२. ( नैजवर्ष्मसमुद्भवम् ) – अयं पाठो गुरुचरणानाम् ॥ ( भृगुमात्मतनूद्भवम् ॥ )

तदेव साधनं कर्तृ जगतोऽस्येति वल्लभाः ।
प्रतिशृण्वन्ति धीमन्तो यतःशब्दादिहोदितात् ॥५४॥

"उत्पत्तिस्थितिनाशानां जगतः कर्तृ वै बृहत्" ।
इति तेषामिह स्पष्टः सिद्धान्तोऽस्ति समुद्धृतः ॥५५॥

"कर्तृ ब्रह्मे"ति वेदेन न कुत्राप्यस्ति शब्दितम् ।
तथापि ते यतःशब्दबोधितं तदमन्वत ॥५६॥

सत्यवादौ च कर्तृत्वे विभाव्यादौ विरोधिताम् ।
सामानाधिकरण्यस्य सम्भवात्तां ततोऽहरन् ॥५७॥

"स्वयं भवति यः सर्वैं रूपैः स कथमव्ययः ।
जगतोऽस्य भवेत्कर्ता" ? प्रश्न एव यदोत्थितः ॥५८॥

तदा तु सर्वभवनसामर्थ्यादेव तस्य ते ।
कर्तृत्वं कर्मतां सर्वभावित्वं चाभ्यमन्वत ॥५९॥

तदेदमा हि कर्मत्वं यदा चैवास्य कर्तृता ।
द्योत्यते, किन्तु नैतेन वस्तुभेदः प्रसाध्यते ॥६०॥

एकेनांशेन कर्तृत्वं स्वीकृत्यांशेन कर्मताम् ।
नानाविरुद्धधर्माणामाश्रयं ब्रह्म तेऽब्रुवन् ॥६१॥

( पूर्वपक्षः )

नन्वेवं कर्तृकर्मत्वधर्मभेदो हि केवलम् ।
विवक्षितो, यदा धर्मिभेदो नास्ति विवक्षितः ॥६२॥

तदा "जन्मादिवद् यत्तद्" इत्येतादृशमस्तु भोः ।
सूत्रं, वृथा किमेताभ्यां पदाभ्याम्, "अस्य", वा "यतः" ॥६३॥

किञ्च न व्यवहारेऽस्मिन् कदाचिदपि दृश्यते ।
कल्पिता भ्रामिका पुंसाम्, एकता कर्तृकर्मणोः ॥६४॥

किञ्चैकस्मिन् घटे कार्ये मृदुपादानमिष्यते ।
तदन्यानि निमित्तानि समीह्यन्ते बहूनि च ॥६५॥

तेष्वेतेषु निमित्तेषु दण्डश्चक्रं च चीवरम् ।
कुलालोऽपि तथा कर्ता नियमेनास्त्यपेक्षितः ॥६६॥

यद्येतद् ब्रह्म जगतः कर्तृस्थाने नियुज्यते ।
जगदेतत्तदा ब्रह्मकार्यस्थाने नियुज्यताम् ॥६७॥

तदा कर्तुः पृथग्भूतमुपादानं विलक्षणम् ।
किञ्चिदत्र भवेद्वाच्यं भवता कर्तृवादिना ॥६८॥

किञ्च भिन्नानि वाच्यानि साधनान्यपि यैरदः ।
कर्तृ ब्रह्म जगत्सर्वमिदं जनयति स्वयम् ॥६९॥

( उत्तरपक्षः )

इत्येतेषु तथाऽन्येषु प्रश्नेष्वाविर्भवत्सु ते ।
कर्तृतां द्विविधां प्राहुर्लौकिकीं चाप्यलौकिकीम् ॥७०॥

लौकिकी कर्तृता नित्यं करणानीतराण्यपि ।
समीहते पृथग्भूतमुपादानं तथाऽपरम् ॥७१॥

अलौकिकं तु कर्तृत्वं न हि किञ्चित्समीहते ।
करणं वाप्युपादानं स्वस्माद् भिन्नं तु यद्भवेत् ॥७२॥

तदलौकिककर्तृत्वयुक्तमेतदुदीर्यते ।
ब्रह्म यस्माज्जगत्सर्वं जायते सचराचरम् ॥७३॥

— ( पूर्वपक्षः ) —

ननु भो यस्य कार्यस्य कर्ता तु स्यादलौकिकः ।
तत्कार्यं लौकिकं वाच्यं किं वा वाच्यमलौकिकम् ॥७४॥

अलौकिकस्य कर्तुस्तु कार्यं वाच्यमलौकिकम् ।
लौकिकस्य च सत्कर्तुः कार्यं लौकिकमेव चेत् ॥७५॥

नालौकिकेन कर्त्रेदं लौकिकं कर्तुमीश्यते ।
न चापि लौकिकेनात्र कर्तुं किञ्चिदलौकिकम् ॥७६॥

तस्माद्यदि जगत्सर्वं लौकिकं भवतो मतम् ।
न तस्य कर्ता कोऽप्यन्यः स्यात्कथञ्चिदलौकिकः ॥७७॥

यद्यलौकिकमिष्येत जगदेव तदा तु भोः ।
वाच्यं तल्लौकिकं यस्माद् भिन्नं जगदलौकिकम् ॥७८॥

इत्थं बहुविधेष्वत्र संशयेषूद्गतेष्वपि ।
मेनिरे करणं किञ्चिज्जगतोऽस्य न लौकिकम् ॥७९॥

— ( पूर्वपक्षः ) —

किञ्च भो व्यवहारेऽस्मिन् कारणे द्विविधे मते ।
जनको जायमानस्य कर्ता कार्यस्य चापरः ॥८०॥

पुत्रादीनां जनयिता पिता यो जनकः स्मृतः ।
न स कर्ता क्वचिल्लोके पुत्रादीनामुदीर्यते ॥८१॥

कुम्भकारो घटादीनां कर्ता नियतमुच्यते ।
किन्तु नासौ घटादीनां जनको वा पितोच्यते ॥८२॥

सजातीयपदार्थस्य जनने कारणं पिता ।
विजातीयपदार्थस्य कृतौ कर्ता च कारणम् ॥८३॥

तस्मादस्ति महान् भेदो जनके चापि कर्तरि ।
निरूप्या कर्तृता कार्याज्जन्याज्जनकता तथा ॥८४॥

तदित्थमस्य जगतः कारणं यदलौकिकम् ।
तदस्य जनकं किंवा सम्मतं कर्तृ वा पुनः ॥८५॥

जनकत्वेऽस्य जन्यस्य (जातस्य) जगतः स्वीकृते तु भोः ।
सजातीयतया नैतदत्र वाच्यमलौकिकम् ॥८६॥

अलौकिकत्वसिद्ध्यर्थं यदि कर्तृत्वमिष्यते ।
समस्तस्यास्य जगतो जडताऽऽपद्यते तदा ॥८७॥

किञ्च यद्वद् घटो नित्यं क्रियमाणः क्रियाक्षणे ।
कर्तुरिच्छति सान्निध्यं तद्वदिच्छेज्जगच्च तत् ॥८८॥

जायामहे वयं सर्वे न तु कर्त्रा क्रियामहे ।
तथात्वे कर्तृसान्निध्यं नैवापेयात् कदाचन ॥८९॥

क्रियमाणस्य किञ्चास्य घटस्य करणक्षणे ।
कुम्भकारस्य तत्कर्तुः सान्निध्यं दृश्यते स्फुटम् ॥९०॥

न तदा दृश्यते श्रीमन् कर्ताऽन्यः कुम्भकारिणः ।
यस्मिन्भवदभिप्रेते घटकर्तृत्वमारमेत् ॥९१॥

वेदेषु जायमानत्वमुच्यते जगतः सतः ।
न क्वचित् क्रियमाणत्वं दृश्यते श्रूयतेऽथवा ॥९२॥

जगतः क्रियमाणत्वे कार्यत्वे वा श्रुतौ मते ।
"जायन्ते", "स्यां", प्रजायेये"—त्यादि व्यर्थं क्रियापदम् ॥९३॥

केवलं पौरुषं सूक्तं दृश्यतां, यत्र दृश्यते ।
जनिः सम्भवतिश्चैव बहुधाऽस्ति प्रयोजितः ॥९४॥

कृधातुस्तु द्विरेवात्र प्रयुक्तोऽस्ति, जनिः पुनः ।
तत्र द्वादशकृत्वोऽस्ति प्रयुक्तश्च ततोऽधिकम् ॥९५॥

अस्तिः सम्भवतिश्चैव जनिरुत्पद्यतिस्तथा ।
सर्वत्र श्रुतिवाक्येषु शतशः श्रूयते, यतः ॥९६॥

जगतो जायमानत्वं तेन सम्भवति स्वतः ।
न पुनः क्रियमाणत्वं कर्त्रा केनापि सिध्यति ॥९७॥

आविर्भावतिरोभावौ किञ्च श्रीवल्लभैः स्वयम् ।
यौ स्वीकृतौ, विरुध्येते कर्तृत्वस्वीकृतौ तु तौ ॥९८॥

आविर्भवति चेद् ब्रह्म स्वयमेव भवज्जगत् ।
तदा कस्यात्र कर्तृत्वं कर्मत्वं कस्य वा भवेत् ॥९९॥

किञ्चैकत्र स्वयं श्रीमान् वल्लभो विबुधाग्रणीः ।
सामर्थ्यं सर्वभवने ब्रह्मणः प्रत्यपादयत् ॥१००॥

यः स्वयं जायते स्वस्माद् वर्धते स्वयमेव च ।
स्वयं विपरिणम्याथ स्वयमेव विनश्यति ॥१०१॥

स कथं सर्वभवनसमर्थः परमेश्वरः ।
जगद्रूपः परेणेह कर्त्रा कर्तुं प्रभूयते ॥१०२॥

तस्मादत्र महागर्वाद् वल्लभैः प्रतिपादितम् ।
यदलौकिककर्तृत्वं { तन्मृषा प्रतिभाति मे ॥१०३॥
स प्रमादो विभाति मे } इति गुरुचरणानां पाठः ॥
भाति प्रामादिकं तु तत्

अत्रालौकिककर्तृत्वस्वीकारात्तु स्वयम्भुवः ।
प्रकृते सर्वभवनसामर्थ्यस्वीकृतं वरम् ॥१०४॥

प्रकृतिः सर्वभवनसमर्था स्वयमेव सा ।
प्रादुर्भूय निजैरंशैस्तिरोभवति सर्वदा ॥१०५॥

अंशभेदादनेकेषां धर्माणां च विरोधिनाम् ।
इयमेकाश्रयो भाति प्रकृतिः परमेश्वरी ॥१०६॥

सेयं स्थूलैर्निजैरूपैर्दृश्यते चानुभूयते ।
तामेव विविधाकारां जगदाहुर्मनीषिणः ॥१०७॥

सैवाऽऽकाशप्रकाशाभ्रभूमिवार्यनलानिलैः ।
निजै रूपैरिह ख्याता भूतभव्यभवत्पदैः ॥१०८॥

भगवान् भृगुरप्येनामतिसन्निहितामपि ।
अन्नप्राणमनोज्ञानाऽऽनन्दरूपामबुध्यत ॥१०९॥

सेयं स्वयं जायमाना वर्धमाना स्वयं स्थिरा ।
स्वयं विपरिणम्यान्ते स्वयमेव प्रलीयते ॥११०॥

निमित्तमात्रमेतस्याः प्रकृतेः पुरुषः परः ।
सोऽपि ज्ञेयो यतस्तस्माद् वरुणस्तमजिज्ञपत् ॥१११॥

तदेतद् द्वितयं सांख्ययोगादौ स्तूयते परम् ।
वल्लभस्तन्निनिन्दैव ह्यंशतः शङ्करानुगः ॥११२॥

दृश्यप्रकृत्यादिपदैर्योऽर्थः शास्त्रे प्रतीयते । ( निरूपितः )
न स ब्रह्मपदेनात्र वाच्य इत्याह वल्लभः ॥११३॥

यथा ब्रह्मणि कर्तृत्वं तथैवास्मिन् स भोक्तृताम् ।
अङ्गीकरोति मतिमान् किन्तु ते द्वे अलौकिके ॥११४॥

निष्क्रियत्वमसङ्गत्वं यत्तु वेदेषु गीयते ।
तदेतल्लौकिकं ज्ञेयं, न कदाचिदलौकिकम् ॥११५॥

अलौकिके क्रियावत्त्वसङ्गतत्वे तु तिष्ठतः ।
ब्रह्मण्यस्मिन् निराबाधे इति श्रीवल्लभाशयः ॥११६॥

भोक्तृत्वसर्वगामित्वसर्वाधिपतितादयः ।
अश्रुता वा श्रुताः सर्वे गुणा अस्य ह्यलौकिकाः ॥११७॥

तदलौकिककर्तृत्वशालि ब्रह्म सनातनम् ।
क्रमेण युगपच्चापि कुरुते लौकिकं जगत् ॥११८॥

"क्रमेण कुरुते ब्रह्म जगदेतच्चराचरम्" ।
इति ब्रह्मानन्दवल्ली चिन्तनादध्यगादसौ ॥११९॥

"अग्नेर्यथा विस्फुलिङ्गा युगपद् ब्रह्मणस्तथा ।
जगद् बभूवे"ति भृगोर्वल्लीतश्चाध्यगादयम् ॥१२०॥

"ब्रह्मानन्दाभिधा वल्ली वक्त्युत्पत्तिं क्रमागताम् ।
भृगुवल्ली च युगपद्," इति वल्लभभावना ॥१२१॥

क्रमेण युगपच्चापि कर्तुमेतां जगत्ततिम् ।
तस्मादलौकिकात् कर्तुरपरो नैव पारयेत् ॥१२२॥

निरङ्कुशजगत्कर्तृभावाच्चैतत् सनातनम् ।
ब्रह्म तेनेह सम्मेने सर्वज्ञं सर्वशक्तिभृत् ॥१२३॥

( अत्र तन्मतखण्डनम् )

कृधातोस्तु न कुत्रापि यद्यप्यत्रास्ति दर्शनम् ।
सम्भवश्च जनिश्चैव श्रूयेते केवलाविह ॥१२४॥

तथाप्येष बलादाभ्यां वल्लीभ्यां कार्यकर्तृताम् ।
अस्मान् बोधयितुं यत्नाननुतिष्ठति निष्फलान् ॥१२५॥

यत्रापि श्रूयते वल्ल्यां कृधातुः सम्प्रयोजितः ।
तत्राऽऽत्मानं स्वयं कर्म ज्ञापयत्यमला श्रुतिः ॥१२६॥

स्वयमात्मकृतिर्नाम स्वयंभूतिः स्वयंजनिः ।
न तत्र कर्तृकर्मत्वभेदो वास्तविकोऽर्थतः ॥१२७॥

ब्रह्मणस्तेन वेदेषु नास्त्यलौकिककर्तृता ।
न च कर्मत्वमेतेषां भूतानां लौकिकं क्वचित् ॥१२८॥

स्थूलया सूक्ष्मया चापि यद् दृशा दृश्यते जगत् ।
मूलप्रकृतिभूतं तत् सर्वमेवास्ति लौकिकम् ॥१२९॥

मूलप्रकृतिरेवैषा कार्यरूपाऽनुभूयते ।
लोकविश्वजगच्छब्दैः स्तूयमाना सहस्रधा ॥१३०॥

अलौकिकत्वं लोकाद्वा भिन्नत्वं चेद् विवक्षितम् ।
पुंसस्तदुच्यतां, तत्र न विरुन्ध्मो मनागपि ॥१३१॥

किन्त्वस्मिन् निर्गुणे पुंसि निःसङ्गे निष्क्रियेऽनघे ।
भावाद् भिन्नेऽपि कर्तृत्व–कल्पना त्वस्ति नाऽनघा ॥१३२॥

( शास्त्रयोनित्वात् )

शास्तीति शास्त्रमित्याहुर्वेदाः शास्त्रं ततो मताः ।
तत्रास्य ब्रह्मणः प्रोक्तं कर्तृत्वमिति वल्लभाः ॥१३३॥
योनिः कारणमित्येतौ शब्दावेकार्थवाचिनौ ।
शास्त्रे योनिः शास्त्रयोनिरिति चेच्छत्स विग्रहम् ॥१३४॥
शास्त्रेषु कारणत्वेन ब्रह्मोक्तमिति कर्तृता ।
पदेन शास्त्रयोनित्वादित्येतेनाऽत्र सूच्यते ॥१३५॥
वस्तुतस्तु न कर्तृत्वं वेदे कुत्रापि घोषितम् ।
तस्मान्न शास्त्रयोनित्वादित्यस्यार्थोऽत्र सुस्फुटः ॥१३६॥
किञ्च सन्नपि शब्दोऽयं "योनिः" कारणवाचकः ।
'कर्तृत्वस्यैव नियतं वाची' त्यस्ति न शासनम् ॥१३७॥
पञ्चम्यन्तस्य किञ्चास्य पदस्यात्र न सिध्यति ।
सम्बन्धः कोऽपि 'जन्मादि यतोऽस्ये,' ति पदैः सह ॥१३८॥
तस्मात्तृतीयतां हित्वा सूत्रत्वेनास्य सूरिणा ।
या द्वितीयाङ्गता प्रोक्ता सा न भाति मनोरमा ॥१३९॥
जगत्कर्तृत्वपक्षस्य स्थापनाय च धीमता ।
याः कृता विविधाश्चेष्टास्ता अथो समनुब्रुवे ॥१४०॥
द्वित्राण्येवात्र वाक्यानि सन्ति तदृशि, यैर्बलाद् ।
जगत्कर्तृत्वमेतस्य ब्रह्मणः स्थापयत्यसौ ॥१४१॥

तैत्तिरीयोपनिषदः प्रायो वल्लीद्वये पुनः ।
असाधिततदर्थानि सन्ति तानीत्यवादिषम् ॥१४२॥

न तैः स्पष्टतया 'ब्रह्म, जगत्कर्त्रि'ति, भाष्यते ।
तथापि न जहात्येष तत्कर्तृत्वदुराग्रहम् ॥१४३॥

एतेषामेव वाक्यानां प्रामाण्याय स वित्तमः ।
शास्त्रशब्दस्य मीमांसां व्यतनोन्निष्प्रयोजनाम् ॥१४४॥

शास्त्रशब्दो हिं वेदार्थवाचीत्येतैः प्रतिश्रुतम् ।
वेदेषु च न कुत्रापि ब्रह्मणः कर्तृतेरिता ॥१४५॥

प्रजापत्यादिदेवानामुच्यते तु स्थले स्थले ।
जगत्कारणता तस्मात्सन्देहो जायते महान् ॥१४६॥

तत्सन्देहनिवृत्त्यर्थं ब्रह्मकर्तृत्वपुष्टये ।
प्रजापत्यादिदेवानां कर्तृत्वोन्मूलनाय च ॥१४७॥

आदौ वेदान्तवाक्यानां सर्वेषामेव वेदताम् ।
साधयामास यत्नेन मन्त्रत्वाद् ब्राह्मणत्वतः ॥१४८॥

पदानामनुरोधेन ब्रह्मरूपार्थवाचिनाम् ।
यत्र पादव्यवस्थाऽस्ति ऋगेषाऽत्राभिधीयते ॥१४९॥

ऋगेव मन्त्रो, मन्त्रश्च वेद इत्यभिधानतः ।
वेदान्तवाक्यान्येतानि वेदा एव न संशयः ॥१५०॥

यच्च वाक्यं भवेदत्र ब्रह्मणः प्रतिपादकम् ।
तद् ब्राह्मणमिति ख्यातं वेदवाच्यमसंशयम् ॥१५१॥

तानि वेदान्तवाक्यानि ब्रह्मणः प्रतिपादनात् ।
ब्राह्मणानीति च ततस्तद्वेदत्वं न हीयते ॥१५२॥
मन्त्रब्राह्मणयोरेव वेदत्वं चास्ति विश्रुतम् ।
तन्मन्त्रब्राह्मणत्वं च वेदान्तेष्वस्ति सुस्थिरम् ॥१५३॥
तस्माद् वेदान्तवाक्यानां वेदत्वेन परिग्रहः ।
कर्तव्य एव विदुषेत्यवादीद् वल्लभः प्रभुः ॥१५४॥
निरुक्तेषु च वेदान्तवाक्येषु ब्रह्मणः स्फुटम् ।
कर्तृत्वमुच्यते तस्माद् ब्रह्म कर्त्रिति निश्चितम् ॥१५५॥
तदेवं शास्त्रयोनित्वादिति यच्छ्रूयते पदम् ।
तज्जगत्कर्तृतामेव ब्रह्मणोऽभिव्यनक्ति नः ॥१५६॥

(इति श्रीमद्वल्लभमतानुवादः ॥)

---

(अथ श्रीमद्रामानुजाचार्यमतानुवादः ॥)

तदेवं वल्लभाचार्यमतमालोच्य संग्रहात् ।
श्रीमद्रामानुजाचार्यमतमालोच्यतेऽञ्जसा ॥१५७॥
जन्मादीति समासस्य विग्रहे शङ्करोदितम् ।
मतमेवान्वमन्यन्त श्रीरामानुजसूरयः ॥१५८॥
सृष्टिस्थितिविनाशानां समाहारस्य वाचकः ।
बहुव्रीहिरयं 'जन्म यस्यादिरि'ति विग्रहात् ॥१५९॥
जगदेतच्च निखिलं सक्षेत्रज्ञं चराचरम् ।
अस्येत्येतत्पदस्थेन सर्वनाम्नेदमोच्यते ॥१६०॥

जन्मादयो विकाराश्च यद्यप्यस्यैव सम्मताः ।
तथापि तदनित्यत्वं नाभिनन्दन्त्यमी बुधाः ॥१६१॥

स्वयमेव प्रवर्तन्ते विकारास्तत्र कारणम् ।
सनिमित्तमुपादानं द्विविधं तेऽपि मन्वते ॥१६२॥

किं निमित्तमुपादानं किञ्चेति स्पष्टभाषणे ।
तेऽपि व्यग्रास्तयोर्भेदे विवेकं दूरतोऽत्यजन् ॥१६३॥

यन्निमित्तं तदेवास्य जगतो बृहतः सतः ।
उपादानमिति प्राहुरैक्यं कारणयोः सतोः ॥१६४॥

तदेवं कार्यरूपस्य जगतो विविधाः क्रियाः ।
लक्षयन्ति विकाराश्च कारणं ब्रह्म शाश्वतम् ॥१६५॥

तद् ब्रह्म कारणं नित्यमस्योपादानमुच्यते ।
तदेवास्य निमित्तं च न भेदः कोऽप्यर्थनयोः ॥१६६॥

यतःपदे प्रवृत्ता या पञ्चमी श्रूयते परा ।
केवलं कारणत्वस्य द्योतिका साऽत्र वर्तते ॥१६७॥

तच्च प्राधान्यतो लोके कारणं द्विविधं मतम् ।
उपादानं निमित्तं चेत्यस्ति प्रागेव भाषितम् ॥१६८॥

तदेतत्कारणद्वन्द्वं यतःशब्देन सूच्यते ।
तसिलन्तेन, नैवात्र वैशिष्ट्यं किञ्चिदिष्यते ॥१६९॥

एतेन वल्लभः श्रीमान् यां जगत्कर्तृतामवक् ।
न तामिच्छन्ति धीमन्तः श्रीमद्रामानुजा इह ॥१७०॥

'जन्माद्यस्य यतः' – सूत्रं यदिदं व्यासनिर्मितम् ।
तदेतद् भृगुवल्लीस्थ – वचनस्य निदर्शकम् ॥१७१॥

भृगुवल्लीस्थवाक्यस्य विचारेणैव जायते ।
स्वयं सूत्रमिदं साधु व्याख्यातं च विचारितम् ॥१७२॥

यतो येन यदित्येवं त्रिभिरेभिर्विशेषणैः ।
विशिष्यते यदेवात्र तद् ब्रह्मेत्यत्र लक्षितम् ॥१७३॥

ब्रह्मणः कारणत्वस्य वाक्यमेतन्निबोधकम् ।
जगज्जन्मस्थितिलया लक्षकाश्च विशेषतः ॥१७४॥

तैरेव लक्ष्यते ब्रह्म जगज्जन्मादिभिः परम् ।
सत्यज्ञानानन्तरूपमेतैरेवोपलक्ष्यते ॥१७५॥

सत्यज्ञानानन्तरूपं यद् ब्रह्म प्राङ् निरूपितम् ।
तैत्तिरीये तदेवात्र लक्षितं चोपलक्षितम् ॥१७६॥

तदेव ब्रह्म, भूतानामुपादानमिहेष्यते ।
निमित्तं च तदेवैषां जगदाख्यावतां मतम् ॥१७७॥

निरुपाधिकसत्ताया योगात् सत्यमिदं स्मृतम् ।
नित्यासंकुचितज्ञानाऽऽकारत्वाज्ज्ञानमीरितम् ॥१७८॥

देशः कालोऽथवा वस्तु, तन्न क्वापि कदाचन ।
यतः परिच्छिनत्त्येतदतोऽनन्तमपीर्यते ॥१७९॥

सत्यज्ञानाऽनन्तरूपं तदेवं ब्रह्म शाश्वतम् ।
निमित्तं चाप्युपादानं जगतो जायते स्वयम् ॥१८०॥

( अथ श्रीमद्रामानुजमते कश्चिद् विशेषः )

विकारास्पदमेतद् यज्जगद् दृश्यमचेतनम् ।
तदस्माद् ब्रह्मणो भिन्नं भिन्नास्तस्माच्च चेतनाः ॥१८१॥

जगतश्चेतनेभ्यश्च ब्रह्मव्यावृत्तिहेतवे ।
विशेषणान्युपात्तानीत्येष रामानुजाशयः ॥१८२॥

जडादस्माच्च जगतो जीवेभ्यश्च विलक्षणम् ।
ब्रह्मैतेषामुपादानं निमित्तं चेति तन्मतम् ॥१८३॥

भृगुवल्ल्यां तथा सूत्रे श्रूयते यद् 'यतः' पदम् ।
तदेकत्वमिहाख्याति जगत्कारणयोस्तयोः ॥ ॥१८४॥

वस्तुतस्तु न सन्तोषश्चेतसस्तेन जायते ।
भाष्येण भगवद्रामानुजप्रोक्तेन विस्तरात् ॥१८५॥

उपादानं निमित्तं च नाभिन्नं दृश्यते क्वचित् ।
तयोरभेदः श्रीमद्भिर्ग्राह्यते केवलाऽऽग्रहात् ॥१८६॥

घटोपादानभूतेयं मृद् भिन्नैवात्र दृश्यते ।
चक्रचीवरकर्त्रादिनिमित्तेभ्यो निरन्तरम् ॥१८७॥

भूतभौतिकपित्रादिमात्रो[1]पादानकारणात् ।
निमित्तान्याशयादीनि भिन्नान्येवात्र जीविनाम् ॥१८८॥

जन्माद्यस्येति सूत्रेऽपि स भेदः स्पष्टमीरितः ।
भिन्नाभ्यां सर्वनामभ्यां [2]यदा चैवेदमा पुनः ॥१८९॥

---

१. मात्रशब्दोऽत्र तन्मात्रपरः । २. " यदा = यच्छब्देन " ।

इदं च मन्यते सूत्रं श्रुतेर्यस्या निदर्शकम् ।
तत्रापि भेद उभयोः स्पष्ट एव विभाव्यते ॥१९०॥

कार्ये नित्यमनुस्यूतमुपादानमतो ध्रुवम् ।
उपादत्ते ह्युपादानं कार्योपादानतो जनः ॥१९१॥

स्पृशन् घटं स्पृशत्येव मृत्तिकां सकलो जनः ।
अनिच्छन् मृत्तिकास्पर्शं घटं स्प्रष्टुं [1]न चेश्वरः॥ १९२॥

अतः सर्वत्र वेदेषु यत्र कार्यं निरूप्यते ।
निरूपितमुपादानं तत्र वेद्यं सनातनम् ॥१९३॥

"इमानि", "भूतानि" — पदद्वन्द्वमेतच्छ्रुतौ श्रुतम् ।
भूतोपादानतत्त्वस्य [2]भिन्नत्वद्योतकं हि तत् ॥१९४॥

तस्माच्च भूतोपादानान्निमित्तं भिन्नमिष्यते ।
यत्तदादिपदैस्तच्च पार्थक्येन निरूपितम् ॥१९५॥

अव्यक्तमस्त्युपादानं जगत्तस्माच्च जायते ।
तदेव जगदन्यत्र व्यक्ता प्रकृतिरुच्यते ॥१९६॥

व्यक्ताऽव्यक्तस्वरूपायास्तस्याश्च प्रकृतेः परः ।
पुरुषोऽस्ति, निमित्तं यस्तत्प्रवृत्तौ प्रजायते ॥१९७॥

इदंभूतादिभिः शब्दैः श्रुतयः शतधा पुनः ।
व्यक्ताऽव्यक्तस्वरूपायाः प्रकृतेरेव बोधिकाः ॥१९८॥

---

१. "न सेश्वरः" इति पाठान्तरम् । सोऽचि लोपे० इति सुलोपे सन्धिः ।

२. "नित्यत्वद्योतकं हि तत्" इति पाठान्तरम् ।

सैवोपादानमेतस्य जगतश्च ततः परम् ।
यत्तदादिपदैर्भिन्नं निमित्तं बोधयन्ति ताः ॥१९९॥

तमिमं वैदिकं शुद्धं सिद्धान्तमनपायिनम् ।
कपिलो भगवान् व्यासः शेषश्चानुबभाषिरे ॥२००॥

इममेवाद्यसिद्धान्तं कृत्वा मनसि सुस्थिरम् ।
श्रीमद्रामानुजो ब्रह्मजगद्भेदमवेदयत् ॥२०१॥

अङ्गीकृत्यापि भेदं तम्, उपादाननिमित्तयोः ।
यदभेदमसौ मेने, विद्वद्भ्यस्तन्न रोचते ॥२०२॥

एवं रामानुजाचार्यमतमालोच्य सादरम् ।
शङ्कराचार्यचरणमतमालोचये क्रमात् ॥२०३॥

( इति श्रीमद्रामानुजमतम् । )

---

( अथ श्रीमच्छङ्कराचार्यमतानुवादः । )

यतःपदेऽत्र पञ्चम्याः श्रवणादेव केचन ।
जगत्कर्तृत्वमेतस्य ब्रह्मणः प्रत्यपीपदन् ॥२०४॥

श्रीमन्तो वल्लभाचार्या अप्येतन्मतगामिनः ।
तदलौकिककर्तृत्वं बलाद् ब्रह्मणि मेनिरे ॥२०५॥

एतदेवानुमानं च ईश्वरास्तित्वसाधनं ।
प्रकल्पेतेति च प्राहुः स्वयं श्रीशङ्करा अपि ॥२०६॥

तथा हि—" एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वसाधनं मन्यन्ते ईश्वरकारणिनः " इति शां. भा. )

परमेतेन सूत्रेण प्रस्तुते किन्तु साध्यते ।
वस्तुतो हीश्वरास्तित्वम्' – इति प्रश्नो यदोत्थितः ॥२०७॥

तदा ते तं नकारेण स्पष्टं प्रत्याचचक्षिरे ।
न चैतन्मेनिरे सूत्रमीश्वरास्तित्वसाधनम् ॥२०८॥

तथा हि–"तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थं, किन्तर्हि, वेदान्तवाक्यप्रदर्शनार्थम्", इति शां. भा.

संसारिव्यतिरिक्तस्य कर्तृत्वेनेश्वरस्य ते ।
न सत्तामुररीकर्तुमुत्सहन्ते मनागपि ॥२०९॥

वेदान्तवाक्यकुसुमग्रथनार्थानि मेनिरे ।
व्यासप्रोक्तानि सूत्राणि नानुमानार्थकानि ते ॥२१०॥

उदाह्रियन्ते श्रुतयः पूर्वं सूत्रैः समासतः ।
ततस्तदविरोधेन विचार्यन्ते तदाशयाः ॥२११॥

प्रस्तुतेषु विचारेषु यच्च स्यात्तत्समर्थकम् ।
अनुमानं तदप्यत्र सादरं बहु मान्यते ॥२१२॥

ब्रह्म नाम पदार्थोऽसौ स्वतन्त्रः सन्नपि स्वयम् ।
इन्द्रियाविषयत्वेन नेन्द्रियैः परिगृह्यते ॥२१३॥

जगद्रूपं कार्यमात्रमिन्द्रियैरिह गृह्यते ।
किन्तु तत् केन सम्बद्धं निश्चेतुं तन्न शक्यते ॥२१४॥

भृगुवल्ली विशेषेण सम्बन्धस्यास्य बोधने ।
प्रवृत्ता भासमानाऽऽसीद् वेदव्यासहृदम्बरे ॥२१५॥

अतो हि भगवानत्र वेदव्यासो महामुनिः ।
जन्माद्यस्येति सूत्रेण भृगुवल्लीं [1]न्यरूपयत् ॥२१६॥

भृगुवल्ली च सम्बन्धं जगतो ब्रह्मणा सह ।
नियतं द्योतयत्यस्माद् भृगुवल्ली विचिन्त्यताम् ॥२१७॥

तदेवं भगवान् व्यासः सूत्रेणानेन केवलम् ।
लक्षयत्यमलज्ञानां भृगुवल्लीं विशेषतः ॥२१८॥

न समर्थमिदं सूत्रं स्वतन्त्रेश्वरकर्तृताम् ।
अनुमातुं स्वतन्त्रं सद् – इति श्रीशङ्कराशयः ॥२१९॥

तथा मनसि कृत्वाऽपि पदार्थस्य विनिर्णये ।
प्रवृत्तोऽतिसमासेन [2]सूत्रव्याख्यानकोविदः ॥२२०॥

जन्मस्थितिविनाशेषु यास्कोक्ताः सकलाः क्रियाः ।
अन्तर्भाव्य ततस्तेषां समाहारं विवक्षति ॥२२१॥

जन्मादिर्यस्य तस्यैव समाहारस्य वाचकम् ।
जन्मादीति पदं, यत्र बहुव्रीहिर्विराजते ॥२२२॥

( अस्य )

इदमा चेन्द्रियग्राह्यमनुमेयं तथा जगत् ।
व्याकृतं नामरूपाभ्यामुच्यते सचराचरम् ॥२२३॥

देशः कालो निमित्तं च क्रिया येषां फलं तथा ।
सर्वं व्यवस्थितं तेषामाश्रयस्तच्च दृश्यते ॥२२४॥

---

१. "अदर्शयत्" इति पाठान्तरम् । २. जन्मादीति शेषः

तद् विभाति च संयुक्तमनन्तैः कर्तृभोक्तृभिः ।
मनसाऽप्यचिन्त्यरचनारूपमेतद् विलक्षणम् ॥२२५॥

षष्ठ्या च जगतस्तस्य सम्बन्धो द्योत्यते सतः ।
जन्मादिनोक्तधर्मेण धर्मिणो नियतोऽन्वयः ॥२२६॥

( यतः )

तस्यास्य जगतः किञ्चित् कारणं नियतं भवेत् ।
तच्च स्यान्नित्यसत्ताकं तदेव ब्रह्म शाश्वतम् ॥२२७॥

तत्कारणत्वबोधाय यच्छब्दात् पञ्चमी परा ।
पञ्चम्यन्ताच्च तसिलः प्रवृत्तिः शास्त्रसम्मता ॥२२८॥

यतःपदमिदं तस्मात् सर्वशक्तेः स्वयंभुवः ।
सर्वज्ञस्य [1]जगत्कार्यकारणत्वाय कल्पते ॥२२९॥

कारणं द्विविधं किन्तु लोके नित्यं विलोकितम् ।
उपादानं निमित्तं च याभ्यां कार्यं प्रजायते ॥२३०॥

तदेतद् ब्रह्म सर्वज्ञं कारणं यदिहेष्यते ।
तत् कीदृगिति तु प्रश्नस्ततः प्रादुर्भवेत् स्वयम् ॥२३१॥

न केवलेन सूत्रेण सरला तन्निराकृतिः ।
तस्मादत्र विनिर्दिष्टा भृगुवल्ली विचार्यताम् ॥२३२॥

इत्याशयेन तात्पर्यं सूत्रस्यास्य स शङ्करः ।
पर्यवासाययत् स्पष्टं श्रुतिवाक्यप्रदर्शने ॥२३३॥

---

१. "जगत्कार्यकारणत्वं प्रवक्ति नः" । इति पाठान्तरम्

श्रुतिवाक्येन सर्वज्ञं यदि ब्रह्मेह सिध्यति ।
निमित्तमस्य जगतस्तदा ग्राह्या निमित्तता ॥२३४॥

यदि तु श्रुतिवाक्येन तदुपादानमुच्यते ।
तदोपादानता ग्राह्या ब्रह्मणोऽस्य सदा सतः ॥२३५॥

तदेवमुक्त्वा सूत्रेऽस्मिन् यतःशब्दार्थनिर्णये ।
जगत्कारणतामेव बभाषे केवलां गुरुः ॥२३६॥

न चैतत्सूत्रभाष्येऽपि क्वचिदूचे स कर्तृताम् ।
न वोपादानतां नापि ब्रह्मणोऽस्य निमित्तताम् ॥२३७॥

यतःपदैकगन्तव्यं कारणत्वं स केवलम् ।
सूत्रेऽस्मिन् गमयामासेत्यहो तस्य विशिष्टता ॥२३८॥

तथापि तदभिप्रायान् व्याकुर्वद्भिर्महात्मभिः ।
बहुभिः साधयाञ्चक्रे यतःशब्देन कर्तृता ॥२३९॥

( अत्र श्रीभामतीकारादयः )

'व्याकृतं' 'नामरूपाभ्याम्' – इति दृष्ट्वा पदद्वयम् ।
साध्यते [1]गुरुकल्पैस्तैर्जगच्चेतनकर्तृकम् ॥२४०॥

'व्याकृतं नामरूपाभ्यां दृष्टं चेतनकर्तृकम् ।
यथा घटादी'–ति धिया कर्तृत्वं साध्यते च तैः ॥२४१॥

वस्तुतस्तु महान् भेदः कृतौ च व्याकृतावपि ।
कृतिरुत्पादनार्थास्ति व्याख्यार्था व्याकृतिस्तथा ॥२४२॥

---

१. गुरुकल्पैः = श्रीमद् भामतीकारप्रभृतिभिः ।

[1]गुरुर्न क्वचिदत्राह नाम्ना रूपेण वा कृतम्
किन्तु व्याकृतमित्याह जगदेतद् विलक्षणम् ॥२४३॥

घटो हि क्रियते पूर्वं, कृतो व्याक्रियते पुनः ।
कुम्भकारोऽस्य कर्तैव, न व्याकर्ता कदाचन ॥२४४॥

व्याकर्तारस्त्वनेके स्युश्चिराज्जातस्य वस्तुनः ।
न तेन तेऽस्य कथ्यन्ते कर्तारः कुत्रचिद् भवे ॥२४५॥

व्याकरोत् पाणिनिः शब्दान्, न शब्दानुदपादयत् ।
व्याकरोति गुणान् राज्ञः कविर्नोत्पादयत्यमून् ॥२४६॥

शङ्करस्तु जगन्मेने व्याकृतं नामरूपतः ।
न पुनः कृतमित्युक्त्वा प्रोवाचेश्वरकर्तृकम् ॥२४७॥

तस्माद् व्याकृतशब्दस्य श्रवणादेव [2]सूरिभिः ।
साधितं कृतिजन्यत्वं जगतो, नैव रोचते ॥२४८॥

( अथ भृगुवल्ल्यनुवादः )

अथ या श्रुतिरेतेन व्याससूत्रेण गीयते ।
निर्दिश्यतेऽथ वाऽङ्गुल्या साऽप्यत्रालोच्यते क्रमात् ॥२४९॥

ब्रह्म ज्ञातुं प्रवृत्तोऽभूद् वरुणस्य सुतो भृगुः ।
उपसृत्य स्वपितरमप्राक्षीच्चास्य लक्षणम् ॥२५०॥

'यतो भूतानि जायन्ते, येन जीवन्ति, यन्ति यत् ।
यच्चाभिसंविशन्त्येतद्, ब्रह्मे–'ति प्रोक्तवान् पिता ॥२५१॥

---

१. गुरुः = आद्यः श्रीमच्छङ्कराचार्यः ।
२. सूरिभिः = श्रीमन्मिश्रचरणाद्यैः ।

"कस्माद् भूतानि जायन्ते, केन जीवन्ति, यन्ति कम् ।
किञ्चाभिसंविशन्ती"ति ज्ञातुं सोऽन्वाचरत्तपः ॥२५२॥

"अन्नाद् भूतानि जायन्ते, जीवन्त्यन्नेन, यन्ति च ।
अन्नमेव विशन्ती"ति – सोऽन्नं ब्रह्मेत्यबुध्यत ॥२५३॥

"अन्नं ब्रह्मे–"ति स प्राह पितरं स्वमुपागतः ।
"नाऽन्नं ब्रह्मे–"ति न प्राह पिताऽपि च परात्मवित् ॥२५४॥

अन्नमेतदतिस्थूलं ब्रह्मरूपमतः पिता ।
ततः सूक्ष्मस्य बोधाय तपश्चर्यां तमादिशत् ॥२५५॥

उग्रेण तपसा स्वेन प्राणं ब्रह्म विवेद सः ।
प्रोवाच पितरं चेत्य 'प्राणो ब्रह्मे'–ति बुद्धिमान् ॥२५६॥

"न प्राणो ब्रह्म विज्ञातः", इति नोवाच वित्तमः ।
यतो ह्यन्नमधिष्ठाय ब्रह्मरूपं स राजते ॥२५७॥

किन्त्वतोऽपि परं सूक्ष्मं ब्रह्मरूपं तदाश्रितम् ।
ज्ञेयमित्यादिशत्तातः पुनस्तप्तुं तपः सुतम् ॥२५८॥

तपस्तप्त्वा ततोऽप्युग्रं मनोरूपमबुध्यत ।
"मनो ब्रह्मे"–ति चोपेत्य पितरं स्वमवोचत ॥२५९॥

"न मनो ब्रह्म विज्ञातम्" इति नैवावदत् पिता ।
यतः प्राणाश्रितं ब्रह्म–सूक्ष्मरूपं मनो मतम् ॥२६०॥

अतः सूक्ष्मतरं ज्ञेयं ब्रह्मरूपं मनःस्थितम् ।
इति कृत्वा स तपसा ज्ञातुं तं पुनरन्वशात् ॥२६१॥

सोऽप्यनिर्विण्णहृदयस्तपस्तप्त्वा सुदुश्चरम् ।
विज्ञानं ब्रह्मणो रूपं व्यजानान्मनसः परम् ॥२६२॥

"विज्ञानं ब्रह्म भगवन्"—इत्युक्तो भृगुणा पिता ।
न तस्य ब्रह्मरूपत्वं प्रत्याख्यातुमकल्पत ॥२६३॥

किन्तु यच्चरमं रूपं ब्रह्मणः श्रुतिसम्मतम् ।
तदत्युग्रतपोयोगाद् विज्ञातुं प्रैरिरत् पुनः ॥२६४॥

तपश्चचार विपुलं वारुणिर्विमलाशयः ।
विज्ञानाच्च परं रूपमानन्दमनुभूतवान् ॥२६५॥

आनन्दस्याश्रयो ज्ञानं विज्ञानस्याश्रयो मनः ।
मनसश्चाश्रयः प्राणा अन्नं प्राणाश्रयस्ततः ॥२६६॥

अन्नस्य चरमावस्थामानन्दमधिगत्य सः ।
आनन्दमेव परमं व्यजानाद् ब्रह्म वारुणिः ॥२६७॥

अन्ननिष्कर्षभूतोऽयमानन्दो यावदान्तरः ।
नोदेति, नैव जनने मतिस्तावत् प्रजायते ॥२६८॥

आनन्दादेव भूतानां जननं जीवनं तथा ।
प्रायणं चाभिसंवेशं स ददर्श स्वया दृशा ॥२६९॥

अतः स पुनरभ्येत्य पितरं पारदर्शिनम् ।
"आनन्द एव परमं ब्रह्मे"—ति प्राह तापसः ॥२७०॥

ज्ञातसारं ततो मत्वा तनयं भृगुमात्मनः ।
न पुनस्तपसे प्राज्ञो वरुणस्तं न्ययूयुजत् ॥२७१॥

एवमानन्दचरमान् परिणामान् प्रयत्नतः ।
अन्नस्य ग्राहयामास वरुणस्तनयं भृगुम् ॥२७२॥

अत एवानुवाकस्य [१]षष्ठस्यान्ते पुनः श्रुतिः ।
अन्नमेवाभितुष्टाव नैवानन्दं न चापरम् ॥२७३॥

तथा हि—" अहमन्नमहमन्नमहमन्नम् " इत्यादि ।

द्वाभ्यामिदं जगज्जातमन्नाद् अन्नादिनस्तथा ।
तस्मादन्नादमन्नं च स्तुवीते सततं श्रुतिः ॥२७४॥

यदा प्राणो भवेदन्नं देहोऽन्नादस्तदा मतः ।
आपो यदाऽन्नमन्नादं तदा ज्योतिः समीरितम् ॥२७५॥

यदाऽन्नं पृथिवी प्रोक्ता तदाऽऽकाशो दुरत्ययः ।
स्तूयतेऽन्नादरूपेण भृगुवल्ल्या विशेषतः ॥२७६॥

यदि त्वाकाशमारभ्य यदानन्दान्तकं जगत् ।
तदेवान्नं, तदाऽऽन्नादमव्यक्तं ब्रह्म गीयताम् ॥२७७॥

यदि त्वव्यक्तरूपेऽपि ब्रह्मण्येवान्नरूपता ।
समीहिता, तदाऽऽन्नादः पुरुषोऽस्तु परात्परः ॥२७८॥

अन्नाद् अन्नादिनस्तस्माज्जगदेतच्चराचरम् ।
द्वाभ्यां जातमतो हेतू द्वावुच्येते यतःपदात् ॥२७९॥

किञ्च ब्रह्मानन्दवल्ली ब्रह्मरूपनिरूपणे ।
अन्नप्राणमनोज्ञानानन्दमेवाधिकं स्तुते ॥२८०॥

---

१. षष्ठस्यान्ते = सप्तमादिष्वनुवाकेषु ।

"ब्रह्मविदाप्नोति परम्" — इति वाक्यं तदादिमम् ।
येन द्विविधता स्पष्टा तत्त्वयोरवगम्यते ॥२८१॥

एकं ब्रह्मपदेनात्र वेद्यं तत्त्वमुदीर्यते ।
द्वितीयं परशब्देन प्राप्यमाणं प्रतीयते ॥२८२॥

यः पुमान् प्रथमं वेत्ति ब्रह्मतत्त्वं स्वरूपतः ।
स एव ब्रह्मवित् तत्त्वं परवाच्यमवाप्नुयात् ॥२८३॥

वृक्षाग्रशाखया यद्वद् ध्रुवतारा निदर्श्यते
यथा च्छत्रेण दृष्टेन लक्ष्यन्ते च्छत्रिणो जनाः ॥२८४॥

यथा च वाच्येनार्थेन लक्ष्यार्थो लक्ष्यते क्रमात् ।
ज्ञातेन ब्रह्मणा तद्वत् परार्थः प्राप्यते क्रमात् ॥२८५॥

एवमन्यस्य विज्ञानाद् अन्यप्राप्तिर्न बाध्यते ।
तेनाऽऽप्नोतिपदस्यात्र मुख्यार्थो नास्ति बाधितः ॥२८६॥

सत्यज्ञानानन्तरूपं ब्रह्मतत्त्वं प्रगीयते ।
परं तत्त्वं गुहा नाम परमव्योमसंज्ञितम् ॥२८७॥

तत्रास्मिन् परमे व्योम्नि गुहानाम्नि व्यवस्थितम् ।
निहितं नितरामस्ति ब्रह्मोपादानमव्ययम् ॥२८८॥

सत्यज्ञानानन्तरूपं यद् ब्रह्मेह समीरितम् ।
स एवात्मा, ततश्चैते भवन्ति महदादयः ॥२८९॥

सत्त्वाश्रयत्वात् तत् सत्यं, ज्ञानं ज्ञानाश्रयत्वतः ।
अच्छेद्यत्वादभेद्यत्वात् – तदनन्तमुदीरितम् ॥२९०॥

( अत्र दर्शनान्तरसमन्वयः )

सांख्यास्तदाहुः प्रकृतिं परमां त्रिगुणात्मिकाम् ।
सदव्यक्तप्रधानादि – संज्ञाभिस्तत् स्तुवन्ति च ॥२९१॥

तदेव दृश्यशब्देन भगवान् स पतञ्जलिः ।
योगशास्त्रेऽभितुष्टाव सत्यं ब्रह्म सनातनम् ॥२९२॥

तदेव भावशब्देन गीयते गौतमादिभिः ।
अजीवजडसंज्ञाभिः केचित्तदवमन्वते ॥२९३॥

एतद्–ब्रह्माङ्कमध्यस्थो महाकाशः प्रकाशवान् ।
तदङ्कस्थो महावायुस्तदङ्कस्थश्च पावकः ॥२९४॥

पावकाङ्कस्थिता आपो ह्यपामङ्कस्थिता मही ।
मह्यङ्कस्थाश्च विविधा ओषध्योऽन्नं तदङ्कगम् ॥२९५॥

मह्योषध्याश्रिते चास्मिन्नन्ने रेतः प्रतिष्ठितम् ।
पुरुषश्च महाप्राज्ञो रेतस्यस्मिन् प्रतिष्ठितः ॥२९६॥

स एष पुरुषो जातस्ततोऽन्नरसपिण्डितः ।
तस्मादन्नाश्रिताः सर्वे प्राणिनः पृथिवीचराः ॥२९७॥

आनन्दमूलं विज्ञानं मूलं ज्ञानस्य नो मनः ।
मनोमूलं स्मृतः प्राणः प्राणश्चैवान्नमूलकः ॥२९८॥

तस्मादत्र महादेवी श्रुतिः सत्यार्थशंसिनी ।
प्रजानां जनने मूलमन्नं कारणमभ्यधात् ॥२९९॥

"अन्नात् प्रजाः प्रजायन्ते याः काश्च पृथिवीं श्रिताः ।
अथो अन्नेन जीवन्ति – अन्नमेवापियन्ति च ॥३००॥

ज्येष्ठमन्नं हि भूतानां तत्सर्वौषधमुच्यते ।
अन्नं ब्रह्मोपासते ये तेऽन्नं ब्रह्माप्नुवन्ति च ॥३०१॥

अन्नाद् भूतानि जायन्ते वर्धन्तेऽन्नेन तानि च ।
अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते" ॥३०२॥

तदेवमन्नमहिमा गीयतेऽत्र निरन्तरम् ।
तदन्नरसभूयिष्ठे प्राणात्माऽस्ति प्रतिष्ठितः ॥३०३॥

एष प्राणमयो ह्यात्मा योऽत्राऽन्यः परिचाय्यते ।
स चान्नरसपिण्डं तमाश्रित्यैवावतिष्ठते ॥३०४॥

"अन्तरे"–पदमत्यर्थं प्रयुज्य श्रीमती श्रुतिः ।
प्राणस्याऽन्नरसेनाऽस्य विना भावं निषेधति ॥३०५॥

प्राणन्ति प्राणमेवानु [1]पशवो देवमानवाः ।
आयुः प्राणो हि भूतानां तस्मात् सर्वायुषं स्मृतः ॥३०६॥

ये प्राणं ब्रह्मरूपेण योगिनः पर्युपासते ।
ते सर्वं सुखरूपेण भुञ्जते पुरुषायुषम् ॥३०७॥

---

१ "समस्ता हि जन्तुर्जुषः" इति श्रीमद्भारतीकृष्णतीर्थ शङ्कराचार्याणामभिप्रेतः पाठः ।

एषोऽन्नरसपिण्डस्य ह्यात्मा शारीर उच्यते ।
तस्मिन् विनष्टे [1]देहोऽयं मृत इत्यभिधीयते ॥३०८॥

नैतस्य प्राणपिण्डस्य मिथ्यात्मत्वेन कुत्रचित् ।
परिकल्पितताां प्राह श्रुतिः श्रीशङ्करो यथा ॥३०९॥

इमं प्राणमधिष्ठाय ह्यात्माऽत्रान्यो मनोमयः ।
प्रवर्तते यतश्चैषामिन्द्रियाणां प्रवृत्तयः ॥३१०॥

प्राणानामयमात्मेति प्रोच्यते पारदृश्वभिः ।
नैतस्य महिमा किन्तु प्रस्तुतेऽतिप्रतन्यते ॥३११॥

अन्तरे पुनरेतस्य मनसोऽन्यः प्रगीयते ।
आत्मा तदाश्रितो नाम्ना यो विज्ञानमयः स्मृतः ॥३१२॥

विज्ञानादेव कर्माणि यज्ञाश्च विविधास्तताः ।
ज्येष्ठं ब्रह्मेति विज्ञानं सर्वे देवा उपासते ॥३१३॥

विज्ञानं ब्रह्म जानानस्तस्माद् यो न प्रमाद्यति ।
स हित्वा पाप्मनः सर्वान्, सर्वान् कामान् समश्नुते ॥३१४॥

तद्विज्ञानमयादन्यो ह्यन्तरे कोऽप्यनुत्तमः ।
आनन्दमय आत्माऽस्ति यो विज्ञाने प्रतिष्ठितः ॥३१५॥

प्रीतिर्मोदः प्रमोदश्च तदीयाङ्गतया स्थिताः ।
ब्रह्मैव मूलमेतस्य यत् पुच्छमिति कीर्तितत् ॥३१६॥

ब्रह्मणः परिणामोऽयं तदेवं श्रुतिसम्मतः ।
आकाश आद्यश्चरमस्तथाऽऽनन्दः परात्परः ॥३१७॥

---

१. " पिण्डोऽयम् " इति पाठान्तरम् ।

निरूपयन्ती रूपाणि तदेवं ब्रह्मणः श्रुतिः ।
वर्गद्वितयरूपेण ब्रह्माभिव्यक्तिमाह नः ॥३१८॥

( अत्र साङ्ख्यसिद्धान्तसमन्वयः । )

आकाशात् पृथिवीं यावद् एको वर्गः प्रकल्प्यते ।
अन्नादानन्दपर्यन्तो द्वितीयश्चात्र कल्प्यते ॥३१९॥

आकाशात् पृथिवीं यावत् कल्पितं वर्गमादिमम् ।
महदित्याख्यया सांख्याः ख्यापयन्ति मनीषिणः ॥३२०॥

अन्नादानन्दपर्यन्ते वर्गे चास्मिन् द्वितीयके ।
तत्त्वद्वाविंशतेः स्वस्या अन्तर्भावं प्रचक्षते ॥३२१॥

आकाशादथ वाऽऽरब्धः आनन्दे योऽवसायितः ।
स एकः सकलो वर्गो ज्ञातव्यो व्यक्तसंज्ञया ॥३२२॥

अयमेवाखिलो वर्गः सांख्ये व्यक्ताह्वया स्तुतः ।
ब्रह्माण्डपिण्डभुवनजगन्नामभिरीर्यते ॥३२३॥

मूलमेतस्य जगतो व्यक्तनाम्नो यदिष्यते ।
तदेतद् ब्रह्म, यत् सत्य–ज्ञानानन्तमिहोच्यते ॥३२४॥

मूलस्य ब्रह्मरूपत्वाद् व्यक्तस्य ब्रह्मरूपता ।
मूलस्य चात्मरूपत्वाद् व्यक्तस्याप्यात्मरूपता ॥३२५॥

( अथाविद्याया अकारणत्वम् )

न कचिच्छ्रुतिवाक्येऽस्मिन् निरुक्तं कोशपञ्चकम् ।
अविद्यायाः समुत्पन्नं कृतं वेत्यभिधीयते ॥३२६॥

अन्नादीनां समुद्भूतिराकाशादिभ्य ईरिता ।
आकाशादेश्च सम्भूतिर्ब्रह्मणोऽत्र स्फुटेरिता ॥३२७॥

तस्मादारब्धमाकाशादानन्दे चावसायितम् ।
व्यक्तं ब्रह्मोद्भवं वेद्यं नैवाऽविद्याकृतं क्वचित् ॥३२८॥

( ब्रह्मण एवोपादानत्वम् )

अतः कुत्रचिदाकाशशरीरं ब्रह्म कीर्तितम् ।
क्वचिच्च वायुरेवोक्तः प्रत्यक्षं ब्रह्म शाश्वतम् ॥३२९॥

क्वचिदग्निः क्वचिच्चापः क्वचिद् भूमिः क्वचिन्मनः ।
आत्मब्रह्मादिभिः शब्दैः स्तूयन्तेऽत्र निरङ्कुशम् ॥३३०॥

अन्नस्य ब्रह्मरूपत्वं प्राणानां ब्रह्मरूपता ।
ज्ञानस्य समनस्कस्य ब्रह्मत्वे ज्येष्ठता पुनः ॥३३१॥

आनन्दस्यापि च तथा ब्रह्मणः परिणामता ।
स्पष्टमूचे निजैः शब्दैर्भगवत्या स्थले स्थले ॥३३२॥

क्वचिदन्नमयो ह्यात्मा क्वचित् प्राणमयः स्मृतः ।
क्वचिन्मनोमयः प्रोक्तः स विज्ञानमयः क्वचित् ॥३३३॥

स आनन्दमयोऽप्युक्तो यतो ह्यात्मा स्थले स्थले ।
तेनाप्येषामुपादानं ज्ञेयं ब्रह्मात्मसंज्ञितम् ॥३३४॥

यद्येतेषामुपादानं न स्याद् ब्रह्मात्मसंज्ञितम् ।
न श्रुतिस्तद्विकारेषु तास्ताः संज्ञाः प्रयोजयेत् ॥३३५॥

मृदुपादानकः कुम्भो मृत्तिकामय उच्यते ।
स्वर्णोपादानिका भूषा स्वर्णमय्यभिधीयते ॥३३६॥

ब्रह्मोपादानकं व्यक्तमिह ब्रह्ममयं स्मृतम् ।
तस्मादेषामुपादानं व्यक्तानां ब्रह्म निश्चितम् ॥३३७॥

आऽऽकाशाद् आ तथाऽऽनन्दाद्, यद् व्यक्तं जगदीरितम् ।
यदुपादानमेतस्य तद् ब्रह्माऽऽत्मा स एव च ॥३३८॥

तत् प्रधानं तदव्यक्तं सा मूलप्रकृतिः परा ।
स एव भावस्तद् दृश्यं त एव परमाणवः ॥३३९॥

यद्यप्याचार्यवर्योऽसावाकाशादिकमुद्गतम् ।
आनन्दान्तं जगत् सर्वमविद्याकृतमुक्तवान् ॥३४०॥

तथाप्येतस्य जगतो नित्याविकृतलक्षणम् ।
सत्यज्ञानानन्तरूपं ब्रह्म कारणमुक्तवान् ॥३४१॥

ब्रह्मणः कारणत्वोक्तावविद्याकृततावचः ।
न प्रमाणतया भाति विरोधात् प्रस्तुतश्रुतेः ॥३४२॥

किञ्चासौ ब्रह्मणः सत्तास्थापनाय स्वयं गुरुः ।
आकाशादेः समस्तस्य संघातस्याह कार्यताम् ॥३४३॥

कार्यभूतस्य सङ्घस्य सत्त्वे सिद्धे स्वभावतः ।
ब्रह्मणः कारणस्यापि सत्त्वं सिध्यत्यबाधितम् ॥३४४॥

ब्रह्मणोऽस्तित्वसिद्ध्यर्थं कार्यास्तित्वमिहाश्रितम् ।
कार्यस्यास्तित्वयोगाच्च ब्रह्मास्तित्वं प्रसाधितम् ॥३४५॥

अविद्या त्वसती, तस्याः कार्यं सन्नैव सम्भवेत् ।
सत्कार्यजननार्थं तु कारणं सदपेक्ष्यते ॥३४६॥

तत्सत्यं कारणं सूक्ष्मं यथा सांख्ये प्रसाधितम् ।
तथैवात्रैतया श्रुत्या, शङ्करेण च साध्यते ॥३४७॥

तस्मादविद्याकृतता ख्यापिता जगतः सतः ।
निर्मूलैवाधिगन्तव्या क्वचिदुक्ताऽप्यनीहया ॥३४८॥

( इत्यविद्यायाः कारणत्वनिरासः । )

( अथ परतत्त्वस्य निमित्तत्वेन निरूपणम् । )

प्रधानाऽव्यक्तसंज्ञस्य तदेवं ब्रह्मणः सतः ।
उपादानत्वमुक्त्वाऽपि श्रुतिरत्र न शाम्यति ॥३४९॥

उपादानात् पृथग्भूतं निमित्तं किञ्चिदव्ययम् ।
बोधयत्यत्रभवती प्रयुक्तैस्तैर्विशेषणैः ॥३५०॥

यदाप्यते ब्रह्मविदा निमित्तं तत्परं स्मृतम् ।
सा गुहा, तदधिष्ठानं परमव्योमसंज्ञितम् ॥३५१॥

सद्भिन्नत्वादसद्वाच्यं तन्निमित्तं निरूप्यते ।
भिन्नं च तदुपादानाद् द्योतते ब्रह्मणः सतः ॥३५२॥

"असन्नेव भवत्येष ह्यसद् ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः" ॥३५३॥

इत्यस्माज्ज्ञायते वाक्याद् भेदः सदसतोर्द्वयोः ।
सदत्र प्रोच्यते ब्रह्म परं तत्त्वमसत्तथा ॥३५४॥

"असद्वा इदमग्रे", भोः, "आसीद्" इति महाश्रुतिः ।
असदाख्यस्य तत्त्वस्य न सत्तां प्रतिषेधति ॥३५५॥

किन्तु तस्य निमित्तत्वं, "ततो वै सदजायत"।
इत्येतद्वाक्यघटकाद् अभिधत्ते ततःपदात् ॥३५६॥

क्रियाश्रयमुपादानं सत्यं ब्रह्मेह कीर्त्यते ।
क्रियैव सुकृतं चास्य स एव रस ईर्यते ॥३५७॥

रस एवायमानन्दो ब्रह्माऽऽनन्दमयं ततः ।
तदधिष्ठानमानन्दी रसवानुच्यते क्रमात् ॥३५८॥

स एव परमाकाशो यत्राऽऽनन्दः प्रकाशते ।
अदृश्यः स तथाऽनात्म्योऽनिलयो न निरुच्यते ॥३५९॥

अधिष्ठानतयैवैष केवलो रसवान् स्मृतः ।
स आनन्दी सतो भिन्नः परमाकाशसंज्ञितः ॥३६०॥

तमिमं परमाकाशं परं ब्रह्मेति केचन ।
परमात्मेति चाख्यान्ति केचित्तं पुरुषं परम् ॥३६१॥

त्रिपादमृतरूपोऽयं वेदेष्वपि च गीयते ।
स एवाऽऽसु प्रजास्वोतः प्रोतो विभुरुदीर्यते ॥३६२॥

अस्माद् भीता [1]इवाभान्ति पवमानाः प्रकल्पनाः ।
अस्माद् भीता इवोद्यन्ति भग्रहा भास्करादयः ॥३६३॥

अग्निरिन्द्रस्तथा मृत्युरितराश्चापि देवताः ।
किञ्च भीता इवैवाऽस्मात् प्रवर्तन्ते शुचिव्रताः ॥३६४॥

केचित्तं परमाकाशं ब्रुवते ब्रह्म निर्गुणम् ।
द्रष्टारं दृशिमात्रं तं शुद्धं प्राह पतञ्जलिः ॥३६५॥

---

१. "इवाऽऽवान्ति" इति पाठान्तरम् ।

स एव प्रकृतेर्भिन्नः पुरुषः साङ्ख्यसम्मतः ।
स एव भिन्नो भावेभ्यः प्रोच्यतेऽभावनामतः ॥३६६॥

तं शून्यवज्रमद्वैतं सौगताः पर्युपासते ।
स एवाऽजीवमध्यस्थ आकाशः कैश्चिदुच्यते ॥३६७॥

उपेक्षितोऽपि चार्वाकैर्निर्गुणत्वादसत्त्वतः ।
स एवाक्षर आकाशः परमो गीयते श्रुतौ ॥३६८॥

( अत्र गुहापदार्थनिरूपणम् । )

गुहा च परमव्योम तमेवाकाशमाहतुः ।
तथापि मतभेदोऽस्ति तयोरर्थविनिर्णये ॥३६९॥

हृदयस्थ इहाकाशे या बुद्धिः सा गुहा परा ।
तत्रैव निहितं ब्रह्मेत्याहुरेके विचक्षणाः ॥३७०॥

परमेतन्मतं युक्तं प्रकृते नैव राजते ।
यतो बुद्धिश्च हृदयं जायते च विनश्यति ॥३७१॥

अन्नप्राणमये देहे हार्दाऽऽकाशः प्रजायते ।
अन्नप्राणमयश्चात्मा भूतसंघात् प्रजायते ॥३७२॥

सम्भवो भूतसंघस्य ब्रह्मरूपाच्च कारणात् ।
तद् ब्रह्म कारणं चास्यां गुहायां निहितं स्मृतम् ॥३७३॥

तस्मादिह गुहा नाम या परं व्योम कीर्त्तिता ।
न सा हृदयमध्यस्थां गुहां बुद्धिं प्रभाषते ॥३७४॥

चिरादुन्मिषिता बुद्धिः क्षिप्रं लयमुपेयुषी ।
कथं भवेदधिष्ठानं कारणब्रह्मणः सतः ॥३७५॥

तस्मादत्र गुहाशब्दो निर्गुणाधारवाचकः ।
तमधिष्ठानमाख्यान्ति सांख्याश्च पुरुषं परम् ॥३७६॥

( अथ श्रुत्युपसंहारः )

एवं भगवती भेदाद् – आश्रयाश्रितयोः सतोः ।
द्विविधं कारणं प्रोचे व्यक्तस्य जगतः सतः ॥३७७॥

एकं ब्रह्म प्रधानाख्यमुपादानं तयेरितम् ।
द्वितीयं पुरुषाख्यं च यन्निमित्तं परात्परम् ॥३७८॥

जन्माद्यस्येतिसूत्रस्थं श्रूयमाणं यतःपदम् ।
न तयोरुभयोर्भेदबोधनाय क्षमं भवेत् ' ॥३७९॥

इति मत्वेव, मन्येऽहम्, आचार्यः शङ्करो गुरुः ।
तैत्तिरीयोपनिषदो दर्शकं तदमन्यत ॥३८०॥

( पूर्वः पक्षः )

यद्यपीह यतो – येन – यदित्यादिः पदावली ।
प्रायेणैकत्वसंख्याया द्योतिकैवावलोक्यते ॥३८१॥

अन्नादन्नेन चानन्दाद् आनन्देनेति यद्यपि ।
पदेष्वेकत्वसंख्यैव स्फुटमेतेषु दृश्यते ॥३८२॥

तेनोपादानरूपस्य ब्रह्मणः प्रतिपादने ।
केवलस्य प्रवृत्तेयं श्रुतिरित्यवभासते ॥३८३॥

तस्यैकस्यैव बोधाय पर्याप्तेऽत्र यतःपदे ।
श्रुतिदर्शनतात्पर्यभाषि भाष्यं निरर्थकम् ॥३८४॥

( उत्तरः पक्षः )

इतिचेन्न तथा वाच्यं, श्रुतिर्नैकार्थबोधिनी ।
सा तु द्वितयमेवात्र कारणं प्राह संहतम् ॥३८५॥

उपादानात् पृथग्भूतं निमित्तं नास्त्युपेक्षितम् ।
यतो हि ब्रह्मविज्ञानात् परप्राप्तिरुदीर्यते ॥३८६॥

तदद्दश्यमसत्तच्च तद् व्योम परमं स्मृतम् ।
तच्चानिलयनं तच्चानिरुक्तं तदनात्मकम् ॥३८७॥

तस्मात्तदुभयोरत्र बोधायैव महाश्रुतिः ।
प्रवृत्तेति न तज्ज्ञानं सूत्रेणैतेन कल्पते ॥३८८॥

तस्मादेतस्य सूत्रस्य श्रुतिदर्शकमात्रता ।
यदवाचि, न सा मिथ्या मनाङ् सह्यं तु भासते ॥३८९॥

( मन्मतम् )

याभ्यामिति पदादेव यदीह तसिलिष्यते ।
तदा तु कारणद्वन्द्वलक्षकं स्याद् यतःपदम् ॥३९०॥

आद्यसूत्रस्थितो ब्रह्मशब्दोऽप्यत्राऽस्तु वाचकः ।
द्वयोः कारणयोरेवमुपादाननिमित्तयोः ॥३९१॥

परत्वेनापरत्वेन ब्रह्मता तिष्ठतु द्वयोः
निमित्ते परता ब्रह्मण्युपादाने तदन्यता ॥३९२॥

सगुणं स्यादुपादानं, निमित्तं ब्रह्म निर्गुणम् ।
द्योतकत्वं द्वयोरत्र केवलेऽस्तु यतःपदे ॥३९३॥

( इति परतत्त्वस्य निमित्तत्वेन निरूपणम् । )

आकाशादा तथाऽऽनन्दाद् यच्चाभिव्यज्यते जगत् ।
तत्सर्वमिदमा ग्राह्यं षष्ठ्यन्तेन मनीषिणा ॥३९४॥

अव्यक्तेर्व्यक्ततापत्तिर्वस्तुनो जन्म कीर्तितम् ।
पुनरव्यक्ततापत्तिस्तिरोभावः प्रकीर्तितः ॥३९५॥

आभिव्यक्तेस्तिरोभावादा च यत्किञ्चिदीक्ष्यते ।
तदेतत् सकलं ब्रह्म व्यक्तं जगदुदीर्यते ॥३९६॥

"अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः" ।
इति यद् भगवद्गीतावाक्यं तदितराशयम् ॥३९७॥

निर्गुणस्य निमित्तस्य स्वरूपज्ञापनाय तत् ।
प्रयुक्तमिति विज्ञेयं यदुपादानतः पृथक् ॥३९८॥

निमित्तं निर्गुणं शून्यमधिष्ठाय गुणान्वितम् ।
अव्यक्तं व्यक्ततामेत्य ब्रह्मेदं कीर्त्यते जगत् ॥३९९॥

न ब्रह्म जगतो भिन्नं न भिन्नं ब्रह्मणो जगत् ।
स्वयं भूत्वा स्वयं स्थित्वा स्वयं स्वस्मिन् प्रलीयते ॥४००॥

अभिव्यक्तेः परं स्वीयगुणधर्मानुसारतः ।
नामानि व्यक्तमाधत्ते व्यवहारे पृथक् पृथक् ॥४०१॥

व्यक्तस्य गुणधर्माभ्यां सहितस्य यदा लयः ।
अव्यक्ते जायते, मृत्युर्व्यवहारे तदा स्मृतः ॥४०२॥

न मृतस्य पुनर्जन्म दृष्टं कस्यापि वस्तुनः ।
न विनष्टो घटः पश्चात् सोऽयमेवं प्रतीयते ॥४०३॥

उत्पत्तेश्च लयं यावद्देहोऽयं जीव उच्यते ।
देहे ब्रह्मणि लीने तु न जीवो न पुनर्भवः ॥४०४॥

सकृज्जन्म सकृन्मृत्युस्तस्माद् व्यक्तस्य वस्तुनः ।
प्रागीश्वरस्वरूपेऽपि तदिदं स्पष्टमीरितम् ॥४०५॥

तदेवं द्विविधं ब्रह्म सगुणं निर्गुणं तथा ।
उपादानं निमित्तं च लक्ष्यतेऽत्र समासतः ॥४०६॥

उभयोरप्यजन्यत्वं नित्यता चोभयोः सतोः ।
तृतीयेनाथ सूत्रेण वेदव्यासेन सूच्यते ॥४०७॥

शास्तृत्वमुभयोरस्य जगतः सुप्रतिष्ठितम् ।
अतस्तयोरयोनित्वं तृतीयेन निरूप्यते ॥४०८॥

॥६१५॥

---

॥१०२३॥

इति श्रीमद्ब्रह्मसूत्रभाष्यालोचने प्रथमाध्यायस्य प्रथमपादस्य द्वितीयं सूत्रम् ।

---

॥ अथ श्रीमद्ब्रह्मसूत्रभाष्यालोचनस्य प्रथमाध्यायस्य प्रथमपादस्य तृतीयं सूत्रम् ॥

## ॥ शास्त्रयोनित्वात् ॥ १ । १ । ३ ॥

( अत्र श्रीमद्वल्लभमतालोचनम् । )

"शास्त्रे योनिः शास्त्रयोनि"स्ततस्त्वे प्रत्यये कृते ।
शास्त्रयोनित्वशब्दोऽयं व्युत्पन्न इति वल्लभाः ॥१॥
ब्रह्मणः कारणत्वस्य शास्त्रेषु प्रतिपादनात् ।
अस्त्यलौकिककर्तृत्वं ब्रह्मणीति च [1]तन्मतम् ॥२॥

सप्तम्यन्तं पदं 'शास्त्रे'—इति यत्त्विह दृश्यते ।
तस्य त्वान्तेन सम्बन्धः किं वा केवलयोनिना ॥३॥
भावार्थकोऽथवा योऽयं प्रत्ययस्त्वः प्रवर्तते ।
योनिशब्दात्त् समासाद्वा स परः किं प्रवर्तितः ॥४॥

इति न स्पष्टमेतस्मिन् पक्षे नः प्रतिभासते ।
यतो ह्यर्थानुवादे तैः परो योनेः प्रयोजितः ॥५॥

इहत्यश्च विशेषोऽस्ति भाषितो वल्लभैरितः ।
प्रागेवेत्यनुभाषेऽथ श्रीमद्रामानुजाशयम् ॥६॥

( अथ श्रीमद्रामानुजाचार्यमतम् )

गुरुणा शङ्करेणात्र समासो द्विविधः स्मृतः ।
षष्ठीतत्पुरुषश्चाद्यो बहुव्रीहिस्ततः परम् ॥७॥

---

1. "तेऽवदन्" इति पाठान्तरम् ।

उपेक्षमाणास्तत्राद्यं श्रीरामानुजसूरयः ।
द्वितीयं श्लाघयामासुर्बहुव्रीहिं विशेषतः ॥८॥

यस्य योनिः स्वयं शास्त्रं शास्त्रयोनीति तत् स्मृतम् ।
तद्भावः शास्त्रयोनित्वं तस्माद् ब्रह्मावबुध्यते ॥९॥

प्रत्यक्षेण प्रमाणेन न हि ब्रह्म प्रमीयते ।
नानुमानेन केनापि तत्साधयितुमीश्यते ॥१०॥

शास्त्रं केवलमत्रास्ति प्रमाणं कारणं परम् ।
येनाऽस्य ब्रह्मणः सत्ता सद्भिर्बोद्धुं प्रभूयते ॥११॥

न बाह्येन्द्रियसम्भूतं [1]न चाभ्यन्तरसम्भवम् ।
न योगसम्भवं किञ्चित् प्रत्यक्षं ब्रह्मबोधकम् ॥१२॥

सामान्यतोऽथवा दृष्टमनुमानं विशेषतः ।
सर्वं कुण्ठितमेवास्ति ब्रह्मास्तित्वप्रसाधने ॥१३॥

( अथ जगत्कर्तृत्वकल्पना तत्खण्डनं च )

महीमहीधरादीनां दृष्ट्वाऽवयवितां बुधाः ।
बहवः कार्यतामेषां साध्नुवन्त्यनुमानतः ॥१४॥

कार्योपादानविज्ञानविधानादिबलान्विताद् ।
ऋते च कर्तुस्तत्कार्यं जायते नैव कुत्रचित् ॥१५॥

तस्मादेषामुपादानकारणज्ञानवान् परः ।
चतुरः कोऽपि कर्ताऽस्ति ब्रह्मेश्वरपदाभिधः ॥१६॥

---

१. " नान्तरिन्द्रियसम्भवम् " इति पाठान्तरम् ।

एवं साध्नुवतामत्र जगत्कर्तृत्वमीश्वरे ।
मतं सम्मर्दयामासुराचार्याः स्थिरयुक्तिभिः ॥१७॥
महीमहार्णवादीनि कार्याण्येतानि नैकदा ।
युगपत् सन्ति जातानि किन्तु कालान्तरे क्रमात् ॥१८॥
कालभेदात्ततश्चैषां कार्याणामपि भेदतः ।
कर्तृभेदोऽपि कस्मान्न भवेदत्र प्रकल्पितः ॥१९॥
कल्पिते कर्तृभेदे च यदेकेश्वरसाधनम् ।
तदेषामनुमानस्य पूजकानां न सिध्यति ॥२०॥

यद्येकः कालभेदेन कार्याणि कुरुते जनः ।
तस्मान्न कालकार्यादिभेदात् कर्ता विभिद्यते ॥२१॥
इत्युच्यते, तदाप्यत्र कर्तृ ब्रह्म न सिध्यति ।
अत्यन्तादृष्टरूपत्वात् कल्पनानुपपत्तितः ॥२२॥
कालकार्यादिभेदाच्च कर्तृभेदे प्रकल्पिते ।
जीवेषु कर्तृता तेषामनुमानात् प्रसेत्स्यति ॥२३॥
कृतं पुनः कल्पितेन ब्रह्मणैकेश्वरेण वा ।
जीवेभ्य एव भिन्नेभ्यो भिन्नानामिह सम्भवात् ॥२४॥

यः प्रयोजनवानस्ति यश्चावयववान् प्रभुः ।
स एव कर्ता लोकेऽस्मिन् कुम्भकार इवेक्षितः ॥२५॥
सिषाधयिषितो यस्तु भवतां जगदीश्वरः ।
स प्रयोजनशून्यश्च निःशरीरश्च साध्यते ॥२६॥

न प्रयोजनशून्यस्य निःशरीरस्य कुत्रचित् ।
कर्तृत्वं दृश्यते, तस्मान्नैव ब्रह्मानुमीयते ॥२७॥

निःशरीरं मनो नैव कुर्वत् कार्यं विलोकितम् ।
तस्मान्न नित्यमनसः कर्तृत्वमपि कल्पते ॥२८॥

किञ्च कर्तृत्वसिद्ध्यर्थं व्यापारः प्रागपेक्षितः ।
निर्व्यापारो न कुत्रापि कर्ता न्यायस्य सम्मतः ॥२९॥

तस्मादीश्वरनिष्ठं तत् कर्तृत्वं नैव सिध्यति ।
निर्व्यापारमनस्कत्वादशरीरतया पुनः ॥३०॥

ईश्वरस्य शरीरित्वे शरीरं तस्य कीदृशम् ।
किं नित्यमथवाऽनित्यमिति शङ्कोदियात् स्वयम् ॥३१॥

नित्यत्वेऽस्य शरीरस्य नित्यावयविनस्तदा ।
देशः कालोऽपि कल्प्यः स्यान्नित्यः साधनसङ्ग्रहः ॥३२॥

किञ्चावयविनो नित्यसत्त्वे तु स्वीकृते त्वया ।
अस्यैव जगतो नित्यं सत्त्वं स्वीक्रियतां प्रभो ॥३३॥

कृतं ततोऽतिरिक्तेन कल्पितेनेश्वरेण ते ।
येनास्य जगतः श्रीमन् कार्यता साध्यते मुधा ॥३४॥

किञ्चास्येश्वरदेहस्य यद्यनित्यत्वमिष्यते ।
तदा तद्व्यतिरिक्तोऽत्र तद्धेतुः स्पृहयिष्यते ॥३५॥

तदेवं पूर्वपूर्वस्य देहस्यात्र समीहिते ।
हेतुत्वे, स्यादवस्थानं कल्पनाया न कुत्रचित् ॥३६॥

( उपसंहारः )

तस्मान्नैवानुमानेन केनाप्यत्र प्रसिध्यति ।
कर्तृत्वं कारणत्वं वा ब्रह्मणो वेश्वरस्य वा ॥३७॥

( अथेश्वरसत्तायां शास्त्रस्यैव प्रामाण्यम् । )

तस्मादेतस्य सत्तायाः स्थापनाय तु केवलम् ।
शास्त्रमस्ति समर्थं यत् सूत्रेणानेन बुध्यते ॥३८॥

यदाप्तवचनं सर्वं तच्छास्त्रमिह कीर्तितम् ।
अन्तःपतितमेतस्य वाङ्मयं नः पुरातनम् ॥३९॥

व्यासस्तु भगवानत्र भृगुवल्लीं विनिर्दिशन् ।
शास्त्रशब्देन भातीति मन्ये श्रीभाष्यसम्मतम् ॥४०॥

किञ्च यद्यपि शब्दोऽयं योनिः कारणवाचकः ।
तथाप्यत्र प्रमाणस्य वाचकत्वेन गृह्यते ॥४१॥

ततः शास्त्रमिदं सर्वं प्रमाणं यस्य केवलम् ।
तद् ब्रह्म शास्त्रयोनित्वादित्येतेनावबुध्यते ॥४२॥

भृगुवल्ली च जगतः कारणं यद् विवक्षति ।
तदभेदं पुरस्कृत्य ह्युपादाननिमित्तयोः ॥४३॥

श्रीभाष्याशयमत्रत्यमेवं संक्षिप्य सादरम् ।
स्थानेऽनुवदितुं मन्ये शाङ्करं मतमुज्ज्वलम् ॥४४॥

( इति श्रीमद्रामानुजमतम् )

( अथ श्रीमज्जगद्गुरुमतम् )

गुरवः शङ्कराचार्या उपन्यास्यन्मतद्वयम् ।
षष्ठीतत्पुरुषं पूर्वं बहुव्रीहिं ततः परम् ॥४५॥

कतरन्मतमुत्कृष्टमित्यत्र तु मनीषिणः ।
स्वयं प्रमाणभूता ये नीरक्षीरविवेकिनः ॥४६॥

मन्मते त्वत्र नो शस्तो बहुव्रीहिः प्रतीयते ।
अद्यत्वे सर्वशास्त्राणां दुर्गमत्वाद् विशेषतः ॥४७॥

किञ्चात्र शास्त्रशब्देन यः पदार्थो विवक्षितः ।
न स वेदादिविद्याभ्यो व्यतिरिक्तोऽवभासते ॥४८॥

एता वेदादिविद्याश्च समधीत्यापि नारदः ।
सनत्कुमारमासाद्य जिज्ञासां व्यतनोन्निजाम् ॥४९॥

सनत्कुमारो भगवान् ज्ञातशास्त्रमहानिधिम् ।
अत्यल्पज्ञमिव प्राज्ञो नारदं पर्युपाहसत् ॥५०॥

"नाममात्रमिदं सर्वं तस्माद् वाचं च भूयसीम्" ।
"वाचोभूयो मन"श्चोक्त्वा शास्त्रे गौणत्वमादधात् ॥५१॥

शास्त्राध्ययनमात्रेण नैवेन्द्रस्तत्त्वमध्यगात् ।
शतमेकोत्तरं वर्षाण्युवास गुरुमन्दिरे ॥५२॥

अकल्पनीयः शास्त्राणां प्रयोगविषयो महान् ।
ह्रासवृद्ध्यादियोगेन न तद्रूपं निरूप्यते ॥५३॥

किञ्च तेषां प्रमाणत्वे संशयग्रस्ततां गते ।
ब्रह्मापि संशयग्रस्तं भवेत्तत्प्रतिपादितम् ॥५४॥

तस्माद् यावन्ति शास्त्राणि सुगमानीह भूतले ।
ब्रह्मस्वरूपचिन्तायां साहाय्यं तैर्वितीर्यते ॥५५॥

न, 'तानि केवलान्येव ब्रह्मरूपनिरूपणे ।
कारणानि प्रधानानी 'त्याशयस्तु समर्थ्यते ॥५६॥

किञ्चात्र श्रुतयः काश्चिदवाङ्मनसगोचरम् ।
वाचाऽनभ्युदितं चाहुर्ब्रह्म नित्यं निरञ्जनम् ॥५७॥

यदवाच्यमविज्ञेयममन्तव्यं च यद् भवेत् ।
तत् कथं स्यात् परं ब्रह्म शास्त्रमात्रप्रमाणकम् ॥५८॥

ऋचो यजूँषि सामानि किञ्च यस्माद् भवन्ति, तत् ।
शास्त्रमात्रैकसंवेद्यं कथंकारं भविष्यति ॥५९॥

तस्मान्नात्र बहुव्रीहिः प्रशस्यो भाति मन्मते ।
षष्ठीतत्पुरुषार्थस्तु ऋङ्मन्त्रैरपि गीयते ॥६०॥

"तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत "

( शु. य. ३१ अ. ७ मं. )

इत्यस्यामृचि सुस्पष्टः शास्त्राणामेष सम्भवः ।
यज्ञात् सर्वहुतो ब्रह्मरूपादद्यापि गीयते ॥६१॥

यथार्द्रेन्धनसंयोगाद् अग्नेर्धूमस्य सम्भवः ।
तथैव सर्वशास्त्राणां ब्रह्मणः सम्भवः श्रुतः ॥६२॥

यथैव वेदाश्चत्वारो विद्या उपनिषद्युताः ।
पुराणानीतिहासाश्च ब्रह्मणः प्रादुरासत ॥६३॥

तथैव सकलाः श्लोकाः सूत्राणि सकलान्यपि ।
व्याख्यानानि च सर्वाणि ब्रह्मणः प्रादुरासते ॥६४॥

व्याख्यानान्तं च वेदादि वाङ्मयं यन्निरूपितम् ।
बृहदारण्यके सर्वं तदेतच्छास्त्रमीर्यते ॥६५॥

वस्तुतस्त्वत्र शब्दो यो जायते श्रुतिगोचरः ।
स एव शास्त्रशब्दस्य प्रस्तुते वाच्यतां गतः ॥६६॥

शब्दोऽयं शासनायाऽलं शब्दे शास्त्रं प्रतिष्ठितम् ।
न हि शब्दमनादृत्य शासनस्यास्ति सम्भवः ॥६७॥

शब्दोत्पत्तिश्च निःश्वासान्निःश्वासः शब्दकारणम् ।
उद्भूतायां विवक्षायां निःश्वासो याति शब्दताम् ॥६८॥

अत एव च वेदादि वाङ्मयं निखिलं श्रुतिः ।
प्राह निःश्वसितं तस्य भूतस्य महतः सतः ॥६९॥

तथा हि—" स यथाऽद्रैन्धनाग्नेरभ्याहितात् पृथग् धूमा विनिश्चरन्ति—एवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः " इत्यादि। ( बृह. २ अ. ४ ब्रा. १० कं. )

निःश्वासस्याश्रयं चोक्त्वा व्यक्तं भूतमिदं महत् ।
तमात्मानं तथा ब्रह्म मैत्रेयीमाह योगिराट् ॥७०॥

शब्दनिःश्वासरूपेण तदेवं स्थूलकर्मणा ।
सूक्ष्मं कारणमव्यक्तं गमयत्यमला श्रुतिः ॥७१॥

तामेव सरणीं प्राञ्चः साङ्ख्याचार्याः समाश्रयन् ।
तामेवाभिव्यनक्त्यत्र भगवान् बादरायणः ॥७२॥

निःश्वासः शब्दतामेत्य शास्त्रत्वमधिगच्छति ।
शब्दः शास्त्रं च निःश्वासस्ततः पर्यायतां गताः ॥७३॥

निःश्वासकारणत्वाद्धि ब्रह्म शब्दस्य कारणम् ।
शब्दकारणतायाश्च शास्त्राणामपि कारणम् ॥७४॥

योनिशब्दः प्रसिद्धोऽस्ति कारणार्थे प्रयोजितः ।
अतः शास्त्रस्य योनित्वं निर्बाधं ब्रह्मणि स्थितम् ॥७५॥

( अत्र कस्यचिद् वल्लभभृत्यस्य विचारः )

अत्र वल्लभभृत्येन केनापि बुधमानिना ।
वेदाश्चैवोपनिषदो हन्तैवमवहेलिताः ॥७६॥

यदि भूतस्य महतः शास्त्रं निःश्वसितं भवेत् ।
अबुद्धिपूर्वकत्वं हि ततस्तेषां प्रसेत्स्यति ॥७७॥

अबुद्धिपूर्वको लोके निःश्वासः प्रत्ययं गतः ।
निःश्वासरूपं तच्छास्त्रं ततश्चाबुद्धिपूर्वकम् ॥७८॥

तथा हि–" द्वितीये निःश्वासस्याबुद्धिपूर्वकत्वेन तथात्वात् "....
"निःश्वासात्मकवेदोपादानत्वेनाबुद्धिपूर्वकनिःश्वासोपादानपुरुषदृष्टान्तसनाथेन प्रतिसाधनेनापास्तम् " ॥ (सविवरणे ब्रह्मसूत्राणुभाष्ये, शास्त्रयोनित्वादित्यत्र, विवरणटिप्पणम् ; पृ. सं. ३८ ॥ )

( अथ तद्विचारविमर्शः । )

अत्रैवमवधातव्यं बुद्धिर्निःश्वासपूर्विका ।
वेदाश्च सकला लोके दृश्यन्ते बुद्धिपूर्वकाः ॥७९॥

निःश्वासजननात् पश्चाद् बुद्धिरुत्पद्यते सती ।
निःश्वासप्रक्षयात् पूर्वं बुद्धिश्च प्रविलीयते ॥८०॥

न निःश्वासमनाश्रित्य बुद्धिः कुत्रापि तिष्ठति ।
तस्मान्निःश्वासजन्यत्वं बुद्धेरत्रावधार्यताम् ॥८१॥

बुद्धेर्निःश्वासजन्यत्वात सूक्ष्मं रूपं प्रतिष्ठितम् ।
निःश्वासे, कलशस्येव कपालेऽव्यावहारिकम् ॥८२॥

किञ्च बुद्ध्या यथा वस्तुस्वरूपमवगम्यते ।
तथा निःश्वसितेनापि सत्पदार्थोऽवगम्यते ॥८३॥

अन्धकारे प्रसुप्तोऽपि निःश्वासादवबुध्यते ।
कामक्रोधादिकान् भावान् निःश्वासोऽभिव्यनक्ति नः ॥८४॥

निःश्वासे बुद्धितत्त्वस्य सम्भवो न भवेद् यदि ।
ततः कथं प्रजायेत प्रतीतिः प्रत्ययः प्रमा ॥८५॥

गुणानां मृत्तिकायाश्च सद्भावाद्धि कपालयोः ।
मृत्तिकावर्तिनः कुम्भे गुणानुपलभामहे ॥८६॥

अत एव न निःश्वासो यावन्नश्यति देहिनः ।
न तावन्मृत इत्येष व्यवहारः प्रवर्तते ॥८७॥

किञ्च भो भवता शास्त्रप्रामाण्यं प्रतिशृण्वता ।
किं शास्त्रत्वमिति ख्यातुं कल्पान्तेऽपि न शक्ष्यते ॥८८॥

भवतो यत्र शास्त्रत्वं तत्राऽन्यस्याऽस्त्यशास्त्रता ।
सर्वमान्यं प्रमाणत्वं कथं तत्र प्रसेत्स्यति ॥८९॥

किञ्चोपनिषदा वेद्यं ब्रह्म केवलया हि तत् ।
न शास्त्रान्तरसंवेद्यमिति ते गुरुरभ्यधात् ॥९०॥

तथा हि—" तं त्वौपनिषदं पुरुषं पृच्छामि, ' इति केवलोपनिषद्वेद्यं ब्रह्म, न शास्त्रान्तरवेद्यम् ॥ " इति कर्तव्यपदाध्याहार-विचारे पृ. ९ सविवरणेऽणुभाष्ये ) ॥

यत्तु शास्त्रान्तरावेद्यं तस्य योनिः कथं भवेत् ।
शास्त्रे इत्यवधानेन प्रष्टव्यः स्वो गुरुस्त्वया ॥९१॥

किञ्च स्वैरकथारूपं यस्य शास्त्रमसौ मुनिः ।
प्रथयेत् स्वां कथं श्लाघां शास्त्रे योनित्वमीरयन् ॥९२॥

किञ्च नैवोपनिषदां शास्त्रत्वं क्वचिदीरितम् ।
शास्त्रं शासनकारित्वाद् राजसं न तु सात्त्विकम् ॥९३॥

वेदाश्चैवोपनिषदः सात्त्विका, न तु राजसाः ।
तस्मान्न तेभ्यः कुत्रापि शास्त्रशब्दः प्रणोदितः ॥९४॥
निःश्वासः सर्वभूतानामाद्यो वेदः प्रतिष्ठितः ।
प्रणिन्युर्ददृशुः प्रोचुर्वेदान् निःश्वाससेविनः ॥९५॥
मातापितृस्वरूपस्य निःश्वासस्यावहेलनात् ।
मृतप्रोक्तं भवेच्छास्त्रं भवदीयमनोगतम् ॥९६॥

अबुद्धिपूर्वकत्वे तु निःश्वासस्य प्रतिश्रुते ।
अबुद्धिपूर्वकास्तेस्युर्वेदा निःश्वासरूपिणः ॥९७॥
यस्मिन्नृचः साम यजूंषीत्यादौ त्रैष्टुभे यतः ।
ऋगादीनां प्रतिष्ठानं मनः प्रोक्तं निरामयम् ॥९८॥
मनसः सम्भवः प्राणात्, प्राणो निःश्वाससंज्ञकः ।
निःश्वासे बुद्धिहीने तु बुद्धिहीनं मनो भवेत् ॥९९॥
बुद्धिहीने मनस्येवमृचः साम यजूंषि वा ।
कथं प्रतिष्ठितानि स्युर्यत्प्रामाण्यं तवेहितम् ॥१००॥
तस्मान्न बुद्धिहीनोऽयं निःश्वासो जगदाश्रयः ।
निःश्वासान्मनसो जन्म, शास्त्राणां मनसस्तथा ॥१०१॥
तन्मनःसम्भवं शास्त्रं ब्रह्मरूपनिरूपणे ।
साहाय्यकारि निःशङ्कं, प्रमाणं केवलं तु न ॥१०२॥
तैत्तिरीयेऽप्यतः शिक्षाध्याये शिष्यानुशासने ।
उपेक्ष्य शास्त्रं, गुरुतां ब्राह्मणस्याह वै श्रुतिः ॥१०३॥

जातायां विचिकित्सायां वृत्ते कर्मणि वा क्वचित् ।
श्रुतिः सम्मर्शिनां शास्ति विप्राणामनुशासनम् ॥१०४॥

न तत्र शास्त्रस्योल्लेखो विचिकित्सानिवारणे ।
दृश्यते, येन शास्त्रस्य प्रामाण्ये स्यान्महाग्रहः ॥१०५॥

अलूक्षा धर्मकामा ये युक्ताः सम्मर्शिनस्तथा ।
ब्राह्मणास्ते हि सर्वत्र प्रमाणं संशयोदये ॥१०६॥

निःसन्दिग्धश्च शास्त्रेण केवलेन न गम्यते ।
कोऽप्यर्थस्तत्र विज्ञेयं सूत्रमेतन्निदर्शनम् ॥१०७॥

कश्चिदत्र बहुव्रीहिं कश्चित्तत्पुरुषं तथा ।
कश्चित् पूर्वपदे षष्ठीं कश्चिदिच्छति सप्तमीम् ॥१०८॥

तस्माद् यदत्र भवता शास्त्रे योनित्वमिच्छता ।
षष्ठीतत्पुरुषस्त्यक्तो वेदैस्त्यक्तस्ततोऽभवः ॥१०९॥

वैदिकत्वं तथाऽऽस्तिक्यं त्वयि तावद्धि तिष्ठति ।
षष्ठीतत्पुरुषं यावन्मुक्तकण्ठं प्रशंससि ॥११०॥

भूतनिःश्वासरूपत्वं वेदानां च स्वयं श्रुतिः ।
बृहदारण्यके प्राह याज्ञवल्क्यमुखोद्गता ॥१११॥

तस्मादबुद्धिपूर्वत्वं निःश्वासस्य विवृण्वता ।
व्यक्ता वल्लभशिष्येण निजा बालिशता कृता ॥११२॥

अतो न सप्तम्यन्तस्य समासः श्रुतिसम्मतः ।
षष्ठीतत्पुरुषस्यैव श्रुतिरस्ति समर्थिनी ॥११३॥

षष्ठीतत्पुरुषस्यैवं प्राशस्त्ये सम्मतेऽपि या ।
समुदेति पुनः शङ्का धीरैः साऽप्यवधार्यताम् ॥११४॥

जन्मादिसूत्रे पूर्वोक्ते वर्तते'ऽस्य'–पदं श्रुतम् ।
इदमः सर्वनाम्नो यन् ङसि निष्पाद्यते बुधैः ॥११५॥

तत्रत्येनेदमा सर्वे शङ्कराद्या गुरूत्तमाः ।
ग्राहयन्ति जगत्सर्वं भूतभौतिकसंकुलम् ॥११६॥

महाभूतादिनश्चास्य यतो जन्मादि जायते ।
तद् ब्रह्मेति च सूत्रार्थस्ततः स्पष्टोऽत्रबुध्यते ॥११७॥

एतेनैतस्य महतो भूतस्यापि च कारणम् ।
ब्रह्मेति बालिशेनापि सुस्पष्टमवगम्यते ॥११८॥

एतन्निःश्वसितं चास्य भूतस्य महतः सतः ।
ऋग्वेदोऽथ यजुर्वेदो वाङ्मयं चेतरद् बृहत् ॥११९॥

एवं ब्रह्मणि भूतानां कारणत्वे प्रतिष्ठिते ।
भूतनिःश्वसितस्यापि कारणत्वं न हन्यते ॥१२०॥

भूतनिःश्वसितं शास्त्रं ब्रह्म तस्यास्ति कारणम् ।
सा च कारणता भूतकारणत्वेन गम्यते ॥१२१॥

पुनस्तत्कारणत्वस्य द्योतनाय महर्षिणा ।
पुनरुक्तिप्रपञ्चोऽयं निरर्थः किं प्रतायताम् ॥१२२॥

सूत्रेण शास्त्रयोनित्वादित्येतेन यदीष्यते ।
शास्त्रकारणतैवात्र सिषाधयिषिता मुनेः ॥१२३॥

सा तु जन्मादिसूत्रेण स्वयमेव प्रसेत्स्यति ।
निष्फलं शास्त्रयोनित्वादिति सूत्रं ततो भवेत् ॥१२४॥

( अथ नव्यमतेन सूत्रार्थः । )

इति चेच्छ्रूयतामत्र वेदव्यासो महामुनिः ।
न शास्त्रकारणत्वेन ब्रह्मसिद्धिं चिकीर्षति ॥१२५॥

अनवस्थात्मकं दोषं कल्पितं प्रतिवादिभिः ।
सूत्रेण स तृतीयेन देवः परिजिहीर्षति ॥१२६॥

याभ्यामेतस्य भूतादेरानन्दान्तस्य जायते ।
जन्मादि जगतस्ते द्वे जायेते कारणे कुतः ॥१२७॥

परैरुद्भाविताम‌ेनामपशङ्कां निवारयन् ।
तृतीयं शास्त्रयोनित्वादिति सूत्रं चकार सः ॥१२८॥

ग्रसितस्कभितेत्यत्र शास्तेस्तृचि, निपातनाद् ।
इडभावस्य; वेदेषु शास्तृशब्दः प्रसाध्यते ॥१२९॥

लोकेऽपि भगवान् व्यासः शतधा तं प्रयुक्तवान् ।
सर्वज्ञस्य मुनेरर्थे प्रयुक्तो बहुधा श्रुतः ॥१३०॥

तथा हि—"मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान् गोपानां स्वजनोऽसतां क्षितिभुजां "शास्ता" स्वपित्रोः शिशुः" ॥
(श्रीमद्भागवत १०-४३-१७)

"मुनीन्द्रः श्रीघनः शास्ता". इत्यत्र अमरकोषे च ॥

तेनैव शास्तृशब्देन कारणद्वितयं मुनिः ।
विवक्षँस्तस्य कार्यत्वम् अयोनित्वान्न्यवारयत् ॥१३१॥

शासनीयमिदं सर्वं महाभूतादिकं जगत् ।
उपादानं निमित्तं च तदीयं शासकद्वयम् ॥१३२॥

विकृतं व्यक्ततां यातं शासनीयमिहोच्यते ।
अव्यक्तमविकारं च शास्तृ कारणमुच्यते ॥१३३॥

अव्यक्ता प्रकृतिः शास्त्री शास्ता च पुरुषोऽव्ययः ।
उभयोरप्ययोनित्वं सूत्रेणानेन सूच्यते ॥१३४॥

जन्मार्थको योनिशब्दो, योनिर्यस्य न विद्यते ।
अयोनिः सो,ऽस्य तद्भावस्तेनायोनित्वमुच्यते ॥१३५॥

प्रधानपुरुषाख्यौ द्वौ शास्ताराविह विश्रुतौ ।
तयोः शास्त्रोरयोनित्वादनवस्था निवार्यते ॥१३६॥

उपादानात् प्रधानाच्च निमित्तात् पुरुषात् परात् ।
न परं कारणं किञ्चिज् जायेतां तौ यतः परात् ॥१३७॥

एतेन पुनरुक्त्यात्मा दोषोऽपि विनिवारितः ।
योनिशब्दस्य मुख्यार्थो न मनागत्र बाधितः ॥१३८॥

सांख्ययोगादिभिः ख्यातो विरोधश्च निरोधितः ।
ऐकमत्यं मुनीनां च स्थापितं साधुसम्मतम् ॥१३९॥

( अथ चतुर्थसूत्रावतरणम् । )

नन्वेवं स्वीकृते सत्त्वे शास्त्रोः कारणयोर्द्वयोः ।
तदित्यादिपदज्ञातमेकत्वं परिहीयते ॥१४०॥

केनोपनिषदारम्भे वाङ्मनश्चक्षुषादिभिः ।
इन्द्रियैर्दुर्गमं ब्रह्म तदेवेत्येकमीरितम् ॥१४१॥

उपादानं निमित्तं चेत्येवं स्यात् कारणद्वयम् ।
ब्रह्मवाच्यं, ततः कस्मात्तदेवेत्येकतेरिता ॥१४२॥

इति चेदुत्थितामेनां शङ्कां परिजिहीर्षति ।
सूत्रकृद् भगवान् व्यासः सूत्रात् तत्तु समन्वयात् ॥१४३॥

तत्तुरीयमतः सूत्रं यत्तु "तत्तु समन्वयात्" ।
इह प्रस्तूयते, बह्व्यो यत्र व्याख्याश्चकासति ॥१४४॥
॥१०२३॥

---

॥११६७॥

इति ब्रह्मसूत्रभाष्यालोचने प्रथमाध्यायस्य प्रथमपादस्य
तृतीयं सूत्रम् ॥

---

## ॥ तत्तु समन्वयात् ॥ १-१-४ ॥

कुत्रचिद् ब्रह्म वेदेषु कर्तृरूपं प्रतीयते ।
क्वचिन्निमित्तरूपं च समवायितया क्वचित् ॥१॥

तत्र किं वस्तुतो ब्रह्म निमित्तं कर्तृ वा स्वयम् ।
किं वा स्वयमुपादानं कारणं समवायि यत् ॥२॥

इत्यस्मिन्त्संशये श्रीमान् वल्लभः प्राह यद् वचः ।
मन्ये तस्यानुवादेन सूत्रार्थः स्पष्टतामियात् ॥३॥

### ( अथ श्रीमद्वल्लभमतम् ॥ )

'जन्माद्यस्य यतः' – सूत्रे पूर्वमेभिर्महात्मभिः ।
कर्तृत्वमेव वाच्यार्थो यतःशब्दस्य बोधितः ॥४॥

अधुना च निमित्तत्त्वं वाच्यमुक्त्वैव केवलम् ।
यतःशब्दस्य कर्तृत्ववाचकत्वं निषिध्यते ॥५॥

तथा हि–"एवं हि सः । पञ्चमी श्रूयते यत इति पञ्चम्यास्तसिरिति । आत्मन इत्यपि पञ्चमी । निमित्तत्वे न सन्देहः पञ्चम्या निमित्तत्वकथनात् । उपादाने कर्तृत्वे च सन्देहः । तद्वचकाश्रवणात् कल्पनायां प्रमाणाभावात् ॥" (इत्यणुभाष्ये – तत्तु समन्वयाद् – इत्यस्य भूमिकायाम् ) ॥

सन्दिग्धमस्ति कर्तृत्वं तथोपादानताऽपि च ।
तद्वाचकस्य शब्दस्य पूर्वमश्रवणात् क्वचित् ॥६॥

इत्युक्त्वा तैर्विशेषेण सूत्रेणानेन सूरिभिः ।
समवायित्वमेवास्य ब्रह्मणः प्रतिपाद्यते ॥७॥
ये ब्रह्मणि न कर्तृत्वं न चोपादानतां तथा ।
मन्यन्ते तान्निराकर्तुं तुकारोऽत्र प्रयोजितः ॥८॥
तच्छब्दश्चात्र निर्दिष्टो बुद्धिस्थब्रह्मवाचकः ।
तत्तु ब्रह्म ततः कर्तृ तथोपादानमुच्यते ॥९॥
वस्तुतस्त्वत्र कर्तृत्वसाधकं नास्ति किञ्चन ।
साधनं येन कर्तृत्वं ब्रह्मण्यवगतं भवेत् ॥१०॥
'समन्वयाद्' इतिपदमुपादानत्वसिद्धये ।
प्रयुक्तं, न हि कर्तृत्वसाधने सुक्ष्मं भवेत् ॥११॥
तस्मादेतेन सूत्रेण साध्यते ब्रह्मणि स्थिरे ।
एतज्जगदुपादानकारणत्वं हि केवलम् ॥१२॥

अत्र तच्छब्दनिर्देश्यं ब्रह्म पक्षः प्रतीयते ।
साध्यं च समवायित्वं, हेतुरुक्तः समन्वयात् ॥१३॥
"किन्तु सूत्रेऽत्र साध्यस्य संकेतोऽपि न दृश्यते ।
तत्कथं समवायित्वं साध्यं वक्तुं प्रभूयते" ॥१४॥
इति शङ्कां समाधातुमितरे वल्लभानुगाः ।
ब्रह्मेति पक्षं मन्यन्ते लभ्यमत्राधिकारतः ॥१५॥
तच्छब्दात् समवायित्वं साध्यमुक्त्वा च ते बुधाः ।
पूर्णाङ्गमनुमन्यन्ते समवायित्वसाधनम् ॥१६॥

कश्चिच्च पक्षमत्रोक्त्वा जगतः समवायिनम् ।
ब्रह्माधिकारसुलभं साध्यं प्राह विचक्षणः ॥१७॥

वस्तुतस्त्वत्रभवतो वल्लभस्य न भासते ।
सिषाधयिषिता साध्या केवला समवायिता[1] ॥१८॥

समवायित्वमेवास्ति सन्दिग्धमिति वल्लभः ।
पुनः पुनः स्वशब्देन सूत्रावतरणेऽभ्यधात् ॥१९॥

नामरूपक्रियारूपे कार्येऽस्मिञ्जगदाह्वये ।
अस्ति भाति प्रियत्वेन सम्यग् ब्रह्मानुवर्तते ॥२०॥

अस्तित्वात् सदिदं कार्यं भानाच्चिदिदमुच्यते ।
प्रियत्वाच्च तथाऽऽनन्दरूपमेतत् प्रतीयते ॥२१॥

सच्चिदानन्दता चैवं यतः कार्येऽनुभूयते ।
तस्माद् ब्रह्माऽन्वितं सम्यगस्मिन्नित्यनुमीयते ॥२२॥

नाभविष्यद् यदि ब्रह्म सच्चिदानन्दविग्रहम् ।
कार्यें समन्वितं, नेदं प्रत्यैष्यत तदा तथा ॥२३॥

अतो ब्रह्मास्य जगतो नामरूपक्रियात्मनः ।
समवायीति सिद्धान्तो वल्लभस्यापि सम्मतः ॥२४॥

"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥

---

१. "ब्रह्मणः" इति शेषः

खवाय्वग्निजलोर्वीषु देवतिर्यङ्नरादिषु ।
अभिन्नात् सच्चिदानन्दाद् भिद्येते रूपनामनी " ॥
( वाक्यसुधा. २१–२२ श्लोकौ ).

इति वाक्यसुधाग्रन्थे शङ्करोऽप्यकरोत् पुरा ।
प्रथितं निजसिद्धान्तं वल्लभाः प्रथयन्ति यम् ॥२५॥

एतेन यदुपादानमथवा समवायि यत् ।
तदेतत् सकलं ब्रह्मेत्याशयः स्पष्टतां गतः ॥२६॥

साङ्ख्याः प्रकृतिमाख्यान्ति परमाणून् परे बुधाः ।
कारणं समवायीति ब्रह्माख्यास्ते न संशयः ॥२७॥

अतो भावोऽथवा ब्रह्म प्रकृतिः परमाणवः ।
सर्वेऽप्यमी समानार्थाः पूर्वग्रन्थे प्रतिश्रुताः ॥२८॥

किन्तु हन्त पुरा काले पूर्वाचार्यकदर्थने ।
मत्त्वा गौरवमारेभे बहुभिः शब्दविग्रहः ॥२९॥

वल्लभैः परमाणूनां ब्रह्मत्वप्रतिपादने ।
सङ्कुचद्भिरनेकत्वदोषस्तेषां प्रकाशितः ॥३०॥

यदि कार्यं जगद्रूपमेकमेतस्य कारणम् ।
तदोपादानमप्येकं कल्पनीयं मनीषिणा ॥३१॥

लोके च परमाणूनामनेकत्वं सुविश्रुतम् ।
तस्मादनेके नैकस्य भवन्ति समवायिनः ॥३२॥

घटोपादानभूतास्ते भिन्ना मृत्परमाणवः ।
पटोपादानभूतेभ्यस्तन्त्वणुभ्यो विलक्षणाः ॥३३॥

अतस्तन्त्वणवो नैव घटोपादानकारणम् ।
न मृत्तिकाणवस्तद्वत् पटोपादानकारणम् ॥३४॥

एवं शब्दच्छलेनात्र निन्दिता अणुवादिनः ।
तथापि ते न निन्दार्हा यतस्ते तथ्यभाषिणः ॥३५॥

कार्यत्वेन जगत्त्वेन यथैकत्वं तवेहितम् ।
कार्ये जगति, तद्वद् भोः कारणेऽपि समीह्यताम् ।
एकत्वं कारणत्वं च, ततोऽसौ[1] ब्रह्मवाचकः । ॥३६॥

किञ्चैकत्वविवक्षायामणूनां भवतोच्यताम् ।
परमाणुपदस्थाने ब्रह्मशब्दो भवत्प्रियः ॥३७॥

न चैवं शब्दभेदेन तत्त्वार्थो भिद्यते क्वचित् ।
अप्शब्देन जलस्यार्थः कविभिर्ग्राहितो यतः ॥३८॥

( अत्र पूर्वपक्षः )

ननु भो यदुपादानं समवाय्यथवा भवेत् ।
तदेव ब्रह्म चेदिष्टं न तदा दुर्गमं हि तत् ॥३९॥

समवेतः पटो यत्र त्वन्मते तन्तवोऽपि ते ।
ब्रह्मवाच्या यतस्तेषु सुस्थिता समवायिता ॥४०॥

---

१. असौ = परमाणुशब्दः ।

कपालयोर्घटस्यैवमुपादानात्मनो मृदः ।
ब्रह्मत्वं न विहन्येत यतस्ते समवायिनः ॥४१॥

तदेवं समवेतानां कारणे समवायिनि ।
ब्रह्मत्वे सुस्थिते, कार्ये ब्रह्मता स्वयमागता ॥४२॥

ततश्च कारणे कार्ये सर्वस्मिन् ब्रह्मतां गते ।
किं वा तदस्ति यन्न स्याद् ब्रह्मरूपं सनातनम् ॥४३॥

ततश्च घटकार्यस्य कर्तृ ब्रह्म यदिष्यते ।
कुलालात्तन्न भिद्येत ब्रह्मत्वात्तस्य धीमतः ॥४४॥

कार्यकारणभावोऽयं तदेवं व्यावहारिकः ।
ब्रह्मण्येवेति न ब्रह्म भिद्यते जगतः पुनः ॥४५॥

ततश्च शङ्करेणोक्तः सिद्धान्तो यः पुरातनः ।
स एव वल्लभेनात्र किं न स्पष्टमनूदितः ॥४६॥

"कारणं व्यतिरेकेण पुमानादौ विलोकयेत् ।
अन्वयेन पुनस्तद्धि कार्ये नित्यं प्रपश्यति "

( अपरोक्षानुभूतिः )

इत्येतद्वचनेनात्र कार्ये ब्रह्मान्वयं गुरुः ।
अपरोक्षानुभूत्याख्यग्रन्थे व्यक्तमुदाहरत् ॥४७॥

( अत्रोत्तरः पक्षः )

इति चेन्न तथा वाच्यं; विशेषः कोऽपि विद्यते ।
श्रीमद्वल्लभसूरीणां मते; योऽत्र प्रकाश्यते ॥४८॥

द्विविधां तेऽभिमन्यन्ते कर्त्रुपादानसन्ततिम् ।
लौकिकीं प्रथमामन्यां स्वाभिप्रेतामलौकिकीम् ॥४९॥
घटो हि लौकिकं कार्यं, कर्ता तस्याऽस्तु लौकिकः ।
कुलालस्तदुपादानं मृत्तिकाऽप्यस्तु लौकिकी ॥५०॥
किन्तु तस्यैव कार्यस्य कर्ताऽस्त्यन्योऽप्यलौकिकः ।
उपादानं निमित्तं च भिन्नमस्याऽस्त्यलौकिकम् ॥५१॥
अलौकिकं तत्कर्तृत्वमुपादानत्वमेव च ।
निमित्तत्वं तथैकस्मिन् ब्रह्मण्येवास्त्यवस्थितम् ॥५२॥
तदलौकिककर्तृत्वनिमित्तत्वादि – धर्मवान् ।
परमात्मा परो ह्यस्मात् कार्यकारणसङ्ग्रहात् ॥५३॥
ततश्च कार्यमात्रस्य भवन्तु परमाणवः ।
उपादानत्वधर्मेण प्रख्याताः समवायिनः । ॥५४॥
किन्तु तेभ्यः पृथग्भूतो लौकिकेभ्योऽस्त्यलौकिकः ।
ब्रह्मनामा पदार्थो यः सर्वोपादानमव्ययम् ॥५५॥
तमलौकिककर्तारं तं निमित्तमलौकिकम् ।
विरुद्धसर्वधर्माणामाश्रयं ते प्रचक्षते ॥५६॥
लोके कर्तृविशेषाणां सद्भावेऽपि ततो यथा ।
अलौकिकस्य कर्तृत्वं ब्रह्मणो नैव हीयते ॥५७॥

तथा हि–" लोके कर्तृविशेषवदुपादानविशेषग्रहणेऽपि न ब्रह्मणि व्यभिचारः " इति सविवरणब्रह्मसूत्राणुभाष्ये ५८ पृष्ठेऽणुभाष्यम् ॥

तथैव लौकिकाणूनामुपादानविशेषता ।
नैवोपादानतां हन्याद् ब्रह्मणोऽस्याप्यलौकिकीम् ॥५८॥

इत्थं नित्याणुवादेऽस्मिन् यथाणुभ्यो विलक्षणः ।
स्वीकृतः कैश्चिदीशोऽत्र तथा तैः स्वीकृतो विभुः ॥५९॥

तथैव सांख्यसिद्धान्तखण्डनाय कृतश्रमैः ।
समवायित्वमव्यक्ते यद्यप्यङ्गीकृतं बलात् ॥६०॥

तथापि तस्य तैस्तत्त्वं तदंशत्वात् समादृतम् ।
अतदंशस्य नैवास्ति कुत्रचित् समवायिता ॥६१॥

अलौकिकस्य बृहतः सर्वेषां समवायिनः ।
अंशभूतामिमे ख्यान्ति प्रकृतिं सांख्यसम्मताम् ॥६२॥

ज्ञानं चाज्ञानमित्येवं प्रकृत्यंशावतः क्वचित् ।
प्रियत्वं चाप्रियत्वं च परिच्छेदश्च दृश्यते ॥६३॥

नानात्वमपि लोकेऽस्मिन् प्रकृतीच्छासमुद्भवम् ।
अत एव न सर्वत्र सच्चिदानन्दता समा ॥६४॥

प्रकृतीच्छावशादेव जडे सत्त्वं प्रतीयते ।
जीवे सत्त्वं च चित्त्वं च अन्तर्यामिणि च त्रयम् ॥६५॥

एवं स्तुत्वापि माहात्म्यमव्यक्तप्रकृतेः परम् ।
ब्रह्मांशतां प्रतिज्ञाय तस्यां गौणत्वमादधुः ॥६६॥

( अत्र पूर्वपक्षः )

प्रकृतीच्छाबलादेव यदा सर्वं प्रसिध्यति ।
न तस्या अंशिनोऽन्यस्य सम्भवे फलमीक्ष्यते ॥६७॥

मैवास्तु प्रकृतेरन्यस्तस्या अंशी विलक्षणः ।
प्रकृतिः केवलैवास्तु जगतः समवायिनी ॥६८॥

निमित्तस्य व्यपेक्षायां पुरुषो यस्ततः परः ।
ततो भिन्नगुणः सोऽस्य निमित्तं सम्भविष्यति ॥६९॥

कृतं पुनः कल्पनया पुंस्प्रकृत्यतिरेकिणः ।
कस्यचिद् भगवन्नाम्नः स्वतन्त्रेच्छावतोऽंशिनः ॥७०॥

येन शित्वेन भवता प्रतिष्ठाप्यः परोऽंशवान् ।
तदंशित्वं निरुक्तायां प्रकृतौ प्रतितिष्ठतु ॥७१॥

किञ्चालौकिककर्तृत्वे मानं किञ्चिन्न लभ्यते ।
येनात्र कर्तृद्वैविध्यस्वीकारः स्यादबाधितः ॥७२॥

उपादानस्य किञ्चैवं द्वैविध्यं नास्ति विश्रुतम् ।
यतो मृदतिरिक्तस्य स्यादुपादानता प्रभोः ॥७३॥

तस्मात् प्रकल्पितो भेदः कर्त्रुपादानयोः पृथक् ।
लौकिकालौकिकत्वाभ्यां, स मृषेति न संशयः ॥७४॥

"असद्वा इदम्०" इत्यादिः श्रुतिरस्तौदसत्पदात् ।
पुरुषं सांख्यसिद्धान्ते यस्त्वधिष्ठानमुच्यते ॥७५॥

सद्राख्या प्रकृतिः प्राप्य तमाधारमजायत ।
स्वयमेव, न तां कोऽपि कर्त्ता घटमिवाकरोत् ॥७६॥
सैव स्वयेच्छयाऽऽत्मानं नानाविधमथाकरोत् ।
सैवाभवदतो भूतभौतिकात्मा जगत्त्रयी ॥७७॥
प्रकृतेरेव सद्भावाज्जगदेतच्चराचरम् ।
वेदैराद्यैश्च मुनिभिः सत्तया बहुधा स्तुतम् ॥७८॥
'तदात्मानं स्वयम्०" इति श्रुतिरप्यत्र केवलाम् ।
तत्पदेन सदात्मानं स्तुवीते प्रकृतिं पराम् ॥७९॥
अतः सत्पदमत्रत्यं प्रकृतेरेव वाचकम् ।
यत् सद्भिन्नमसत्तच्च पुरुषार्थमसत्पदम् ॥८०॥
अतो न किञ्चिद् वचनं प्रमाणं वाऽत्र विद्यते ।
अलौकिकस्य येन स्यादुपादानस्य कल्पना ॥८१॥
ततो न जगतः कोऽपि भिन्नः कर्ताऽस्त्यलौकिकः ।
न चाणुप्रकृतेर्भिन्नमुपादानमलौकिकम् ॥८२॥

( उत्तरपक्षः )

इत्येवं पूर्वपक्षस्य खण्डने क्षीणबुद्धयः ।
प्रायतन्तेतराचार्यमानभङ्गाय वल्लभाः ॥८३॥

( अत्र श्रीमद्रामानुजमतानुवादः । )

अत्र केचन मीमांसां षोडशाध्यायसम्मिताम् ।
एकामखण्डितां प्राहुरङ्गद्वयविभूषिताम् ॥८४॥

पूर्वाङ्गं पूर्वमीमांसा द्वादशाध्यायसम्मिता ।
प्रोक्ता चोत्तरमीमांसा चतुरध्यायसम्मिता ॥८५॥

यथा च पूर्वमीमांसा क्रियार्था, प्रतिपादिका ।
धर्मस्य केवलस्यैवमुत्तराऽपीति तन्मतम् ॥८६॥

( अत्र श्रीमद्वल्लभकृतं तत्खण्डनम् ॥ )

तन्मतं खण्डयन्त्येते यथा वल्लभसूरयः ।
तदत्र नितरामेव समासेन निवेद्यते ॥८७॥

न हि सर्वत्र वेदेषु धर्म एवास्ति केवलः ।
जिज्ञास्यः, किन्तु जिज्ञास्यं ब्रह्माऽप्यस्तीतरत्ततः ॥८८॥

धर्मस्योत्पादकं कर्म, वेदैः कर्माऽवबुध्यते ।
सन्देहानुत्थितानत्र जैमिनिः सन्न्यवारयत् ॥८९॥

मोक्षप्रदायकं ब्रह्म, वेदैर्ब्रह्माऽवबुध्यते ।
सन्देहानुत्थितानत्र वेदव्यासो न्यवारयत् ॥९०॥

तदेवं कर्मणां ज्ञाने जैमिनिः शरणं परम् ।
ब्रह्मज्ञाने च भगवान् वेदव्यासो महामुनिः ॥९१॥

उभाभ्यामपि काण्डाभ्यां यद्यभोत्स्यत केवलः ।
धर्मस्तदाऽभविष्यद् भो व्यर्थो वैयासिकः श्रमः ॥९२॥

अथातो वेदजिज्ञासेत्युक्त्यैवोभयकाण्डयोः ।
अलौकिकार्थोपयोगी संस्कारार्थः प्रसेत्स्यति ॥९३॥

ततो द्विविधजिज्ञासा – करणं स्यान्निरर्थकम् ।
धर्माङ्गत्वात्ततो भिन्न – ब्रह्मचिन्ताऽनपेक्षणात् ॥९४॥

( सिद्धान्तः )

धर्मस्य साधनाद् भिन्नं ब्रह्मज्ञानस्य साधनम् ।
धर्मस्य च फलाद् भिन्नं ब्रह्मज्ञानफलं बृहत् ॥९५॥

क्रियानुपूर्वी कल्पोक्ता वर्तते धर्मसाधनम् ।
स्वर्गादि च विशेषेण कल्पे धर्मफलं श्रुतम् ॥९६॥

वेदान्तानां विचारश्च ब्रह्मज्ञानस्य साधनम् ।
ततश्च श्रूयते मोक्षः फलं तस्यातिदुर्लभम् ॥९७॥

फलसाधनयोरेवं धर्मस्य ब्रह्मणस्तथा ।
भेदात्तद्बोधकौ काण्डौ विभिद्येते परस्परम् ॥९८॥

ततश्च पूर्वकाण्डे यो साध्यो धर्मो निरूपितः ।
तत्प्रवर्तकता नित्यं विधिवाक्ये प्रतिष्ठिता ॥९९॥

यच्च प्रस्तूयते ज्ञानमुत्तरे ब्रह्मणः परम् ।
तत्तु वेदान्तवाक्येषु स्वयं सिद्धं प्रतिष्ठितम् ॥१००॥

(अत्र पूर्वपक्षः ।)

ननु वेदान्तवाक्यानां सिद्धार्थप्रतिपादनात् ।
न प्रवर्तकता, नापि पुरुषार्थोपयोगिता ॥१०१॥

अतस्तदप्रमाणत्वं कुतो न परिकल्प्यते ।
इति चेच्छ्रूयतां श्रीमद्वल्लभाभिमतं मतम् ॥१०२॥

पूर्वकाण्डेऽपि, सिद्धान्ते, सिद्धार्थप्रतिपादनम् ।
वर्तते, न हि साध्योऽर्थः कोऽप्यत्र प्रतिपाद्यते ॥१०३॥

साध्यार्थप्रतिपादित्वे, निषेधैः प्रतिषेधनात् ।
निषिद्धं नरकं नैव पुनरस्तित्वमाप्नुयात् ॥१०४॥

नैवास्ति साध्यं नरकं क्वचिद् वेदागमादिषु ।
तत्कथं साध्यतां प्राप्तं, साध्यार्थप्रतिपादने ॥१०५॥

## ( साधक (प्रवर्तक) निरूपणम् । )

वेदादिव्यतिरिक्तोऽस्ति सर्वात्मा हरिरेव सः ।
यः सर्वान् साधयत्यर्थान् साध्वसाधून् स्वरादिकान् ॥१०६॥

स प्रवर्तयिता सर्वपदार्थानां परात्परः ।
यज्ञस्वर्गादयः सर्वे तेन सिद्धा, न साधिताः ॥१०७॥

सिद्धा एव च ते यज्ञाः सर्ववेदेष्वनूदिताः ।
मन्त्राः कर्माणि सर्वाणि सिद्धान्येव चचक्षिरे ॥१०८॥

मन्त्राणां कर्मणां चैव दर्शनं श्रूयते श्रुतौ ।
येन तेषामसाध्यत्वं सिद्धत्वं च प्रसिध्यति ॥१०९॥

साध्यं न दृश्यते पूर्वं, सिद्धं पश्चात् प्रदृश्यते ।
दर्शनं चाग्निहोत्रादेः सिद्धं श्रुत्यैव गीयते ॥११०॥

सिद्ध एव ततो यज्ञो विष्णुरूपः सनातनः ।
क्रियानुपूर्वीकरणात् प्रादुर्भवति स स्वयम् ॥१११॥

ध्यानादिक्रियया यद्वद् भगवान् प्रकटीभवेत् ।
आधानादिविधानेन तथा यज्ञोऽपि कल्पते ॥११२॥

तदेवं सिद्धवस्तूनां याथार्थ्यप्रतिपादनात् ।
नाऽनुवन्त्यप्रमाणत्वं वेदवाक्यानि कुत्रचित् ॥११३॥

पुरुषार्थोपयोगित्वमप्येतेषां न हीयते ।
यतः पुमर्थः स्वर्गादिस्तैः सिद्धोऽप्युपलभ्यते ॥११४॥

आख्यानान्यपि सिद्धानामर्थानां प्रतिपादनात् ।
न मिथ्यार्थानि मन्यन्ते श्रीमद्वल्लभसूरिभिः ॥११५॥

तदेवं श्रुतिवेदोक्तपदार्थानां प्रसाधकः ।
प्रवर्तकश्च भगवान् हरिरेव न चेतरः ॥११६॥

तत्प्रवर्तितसिद्धार्थयाथार्थ्यप्रतिपादनात् ।
वेदाः प्रमाणतां यान्ति पुरुषार्थोपयोगिनः ॥११७॥

( अत्रोद्भावितोऽन्योन्याश्रयः )

स्वातन्त्र्येणात्र वेदानां प्रामाण्ये स्थिरबुद्धयः ।
अन्योन्याश्रयनामानं दोषं पश्यन्ति केचन ॥११८॥

योनित्वं हि प्रमाणत्वं वल्लभैः प्रागुदीरितम् ।
तद् योनित्वं हरेश्चास्य शास्त्र एव प्रतिष्ठितम् ॥११९॥

शास्त्रेणैव हरेः सत्ता यतश्चात्राऽवबुध्यते ।
तस्मात् प्रमाणं, सत्तायां हरेः शास्त्रं न चापरम् ॥१२०॥

तदेतच्छास्त्रयोनित्वाद्, इत्यत्रास्त्यभ्युदीरितम् ।
अत्रोच्यते च शास्त्रेण सिद्धार्थप्रतिपादनम् ॥१२१॥

सिद्धार्थप्रतिपादित्वे वेदानां तु, न सिध्यति ।
शास्त्रप्रमाणकं ब्रह्म, स्वतः सिद्धं यतो हि तत् ॥१२२॥

स्वतःसिद्धत्वसिद्ध्यर्थं प्रमाणान्तरमिष्यते ।
नैवानुवादकेनात्र वेदेनैतत् प्रसेत्स्यति ॥१२३॥

हरिसत्ताप्रसिद्ध्यर्थं वेदप्रामाण्यमिष्यते ।
सिद्धानुवादितासिद्ध्यै हरिप्रामाण्यमिष्यते ॥१२४॥

तदेवं वल्लभाचार्यमतेऽन्योन्याश्रयाभिधः ।
दोषो दुर्वारतां यातीत्येकेषां निश्चलं मतम् ॥१२५॥

अनुद्धृत्य तमेतं ते दोषमाचार्यपुङ्गवाः ।
क्रियापरत्वं पूर्वस्य, प्राहुर्नैवोत्तरस्य ते ॥१२६॥

'क्रियापरत्वं सर्वस्य वेदस्यैव,' वदन्ति ये ।
तानेतानखिलान् मूर्खान् प्रवदन्ति मनीषिणः ॥१२७॥

'आम्नायस्य क्रियार्थत्वाद्०' इति सूत्रं चकार यः ।
स जैमिनिरपि ह्येषां मते मूर्खश्च सिध्यति ॥१२८॥

आम्नायशब्दस्त्वत्रत्यः काण्डयोरुभयोरपि ।
सर्वस्यापि च वेदस्य वाचकोऽभ्युपगम्यते ॥१२९॥

न काण्डभेदो वेदेषु पौर्वापर्येण दृश्यते ।
येनैकतरकाण्डस्य वाच्याम्नायपदं भवेत् ॥१३०॥

यद्याम्नायपदेनात्र केवला संहितोच्यते ।
नैवोपनिषदस्तेन प्रोच्यन्त इति मन्यते ॥१३१॥

तदा तु तासां वेदत्वे सन्देहः स्याद् दुरुद्धरः ।
वेदाम्नायपदद्वन्द्वे पर्यायत्वस्य दर्शनात् ॥१३२॥

"तदा तासामवेदत्वं स्वयमेवाऽवहीयते" इतिश्रीमद्-
भारतीकृष्णतीर्थशङ्कराचार्यचरणसम्मतः पाठः ।

किञ्च वेदगता यद्वद् ऋगेकाऽऽम्नायते बुधैः ।
तथोपनिषदोऽप्यत्र ह्याम्नायन्ते विचक्षणैः ॥१३३॥

तस्मादाम्नायशब्दोऽयं नैकस्यांशस्य वाचकः ।
किन्तु सर्वस्य वेदस्य वाचकत्वाय सम्मतः ॥१३४॥

तस्याम्नायस्य भगवाञ्जैमिनिर्यः क्रियार्थताम् ।
ब्रवीति, हन्त स मुनिर्वल्लभैर्मूर्ख ईर्यते ॥१३५॥

तथा हि—"तस्मात् पूर्वमीमांसानभिज्ञाः क्रियापरत्वं सर्वस्यापि
वेदस्य वदन्तो मूर्खा एव" इत्यत्राणुभाष्यम् ।

कर्मस्वनुपयोगित्वं ब्रह्मज्ञानस्य ये पुनः ।
वदन्ति, तानपि ह्यज्ञानुवादोत्तरवादिनः ॥१३६॥

तथा हि–" उत्तरवादिनोऽपि पूर्वज्ञानमङ्गीकृत्य पूर्वानुपयोगित्वं ब्रह्मज्ञानस्य वदन्तो वेदानभिज्ञाः " । इत्यणुभाष्यमत्रत्यम् ।

यद्यप्येषा न मे वाणी परुषा वल्लभेरिता ।
भाति, किन्तु मतं त्वेतन्नितरामस्य रोचते ॥१३७॥

( अत्र यथार्थभाषिता श्रीमद्वल्लभानाम् । )

तन्मते ब्रह्मणो ज्ञानं क्रियायामुपकारकम् ।
क्रिया च ब्रह्मणो ज्ञाने नितरामुपकारिका ॥१३८॥

ब्रह्मज्ञानात् परं कर्म कुर्वन् भयविवर्जितः ।
सरहस्यं समग्रस्य कर्मणः फलमश्नुते ॥१३९॥

क्रियाकलापः सकलः कल्पितो ब्रह्मवेदिभिः ।
ब्रह्मवेदी हि तेनाऽस्य रहस्यं ज्ञातुमर्हति ॥१४०॥

ब्रह्मज्ञानादपेतस्य कर्मश्रद्धाऽभिवृद्धये ।
अपूर्वस्वर्गनरकाः कल्पिता ब्रह्मवेदिभिः ॥१४१॥

अनन्तजीवनित्यत्वं धर्माधर्मौ प्रकल्प्य च ।
श्रूयन्ते रक्षितानीह कर्माणि ब्रह्मवेदिभिः ॥१४२॥

निष्फलं न च मन्येऽहं तेषु कर्मसु किञ्चन ।
येषां संरक्षणायैष यत्नो मुनिभिरादृतः ॥१४३॥

ब्रह्मविद् यदि कर्माणि कुर्वन्, मन्त्रार्थचिन्तने ।
रमेत, नूनमेवासौ ज्ञानविज्ञानवान् भवेत् ॥१४४॥

हस्तामलकवत्तस्य दैविकं भौतिकं तथा ।
समस्तमपि विज्ञानमुपकाराय संभवेत् ॥१४५॥

तान्त्रिकं मान्त्रिकं किञ्च रहस्यं चिन्तयन् बुधः ।
यदि कर्माणि कुरुते द्रुतं ब्रह्म स बुध्यते ॥१४६॥

अतः सर्वेषु वेदेषु व्यत्ययेनापि भाषितौ ।
काण्डावन्योन्यसाहाय्यकारिणावेव सम्मतौ ॥१४७॥

एवं श्रीवल्लभो वेदे काण्डद्वयभिदां पुरा ।
स्वीकृत्यापि तदन्योन्योपकारित्वं प्रशंसति ॥१४८॥

नन्वेवं पूर्वकाण्डेऽपि प्रस्तावो ब्रह्मणस्तथा ।
कर्मणामुत्तरे काण्डे प्रस्तावः किं न लभ्यते ॥१४९॥

इति चेद् भगवानादौ मनुरेव स्वयं प्रभुः ।
प्रास्तवीदुभयत्रैतदुभयं धर्मनिर्णये ॥१५०॥

नन्वेवं न स्वतन्त्रेण काण्डेनैकेन केनचित् ।
पुमर्थः सिद्धतां गच्छेन्मिथः साहाय्यकारणात् ॥१५१॥

इति चेदहमत्रार्थे सम्मतः किन्तु वल्लभाः ।
पुमर्थसिद्धौ नाभेदमङ्गीकुर्वन्ति काण्डयोः ॥१५२॥

( अथ प्रकृतानुसरणम् )

तैरेवमाग्रहेणैव शङ्करप्रतिवादिभिः ।
ब्रह्मणः समवायित्वं सूत्रेणानेन साध्यते ॥१५३॥

परस्परविरुद्धार्थवाचित्वेनावभासिनाम् ।
वचनानामनेनोक्तः शङ्करेण समन्वयः ॥१५४॥

तत्रैते विविधान् दोषान् समुद्भाव्य मनीषिणः ।
ब्रह्मणः समवायित्वसाधकं सूत्रमूचिरे ॥१५५॥

त एव पुनरस्थूलमनण्वादि श्रुतेर्वचः ।
उद्धृत्य समवायित्वे विरोधमुदभावयन् ॥१५६॥

विरुद्धसर्वधर्माणामुक्त्वा च पुनराश्रयम् ।
चक्रुर्विरुद्धवाक्यानां स्वयमेव समन्वयम् ॥१५७॥

तदेवं दूषयित्वाऽपि शङ्करस्य मतं पुरा ।
बलाद् भङ्ग्यन्तरेणैव तन्मतं मानयन्ति ते ॥१५८॥

किञ्च "ब्रह्म स्वयं स्वस्माद् भिन्नाञ्जीवजडादिकान् ।
सृजती"ति मतं तत्र वैषम्याद् गर्हयन्ति ते ॥१५९॥

"तत्तत्कर्मानुसारेण जीवानां सुखदुःखयोः ।
कारणं परमात्मे"ति मतं तेभ्यो न रोचते ॥१६०॥

तथात्वे परमेशस्य खण्ड्येत ( भज्येत ) परमेशता ।
विनश्येत् सर्वमाहात्म्यं स्वातन्त्र्यं कर्तृता तथा ॥१६१॥

( अत्र शङ्कराचार्यमतानुवादः । )

कर्तृत्वं किञ्च भोक्तृत्वं मा भूद् ब्रह्मणि केवले ।
तदस्तु केवलं शुद्धं गुणकर्मविवर्जितम् ॥१६२॥

खपुष्पादेरवस्तुत्वान्न तत्कर्ता यथेप्सितः ।
प्रपञ्चस्याप्यवस्तुत्वात् तत्कर्तृत्वं न चिन्त्यताम् ॥१६३॥

विशेषादर्शनादेव रज्जौ सर्पभ्रमो यथा ।
ब्रह्मण्यविद्यया तद्वत् प्रपञ्चस्यास्तु सम्भ्रमः ॥१६४॥

तथा च समवायित्वसाधनाय परिश्रमः ।
व्यर्थ एव यतो मिथ्या कर्तृत्वं कर्मता तथा ॥१६५॥

( तत्खण्डनोपक्रमः )

इति शाङ्करसिद्धान्ते शास्त्रानर्थक्यमुक्तवान् ।
आसुरत्वं तथा वस्तुपरिच्छेदादसङ्गतिम् ॥१६६॥

वल्लभो निष्प्रपञ्चत्वं ब्रह्मणो वेदसम्मतम् ।
मत्वाऽपि तस्य कर्तृत्वं न निषेधति कुत्रचित् ॥१६७॥

अध्यारोपापवादेन श्रुतीनां यः समन्वयः ।
निर्गुणे ब्रह्मणि प्रोक्तः शङ्करेण महात्मना ॥१६८॥

तत्र वैमत्यमात्मीयं दर्शयन् वल्लभः प्रभुः ।
महासाहसिकान् प्राह शङ्करं च तदध्वगान् ॥१६९॥

तथा हि–"अतः स्वबुद्ध्या शास्त्रार्थं परिकल्प्य तत्र वेदं योजयन्तो महासाहसिकाः सद्भिरुपेक्ष्याः" । इतीहत्यमणुभाष्यम् ।

श्रुतीनामभिधेयार्थो ग्राह्यस्तत्र न लक्षणा ।
न व्यञ्जनाऽथवा ग्राह्या तात्पर्यार्थान्तरं न वा ॥१७०॥

भासमानो विरोधश्च श्रुतीनां स परस्परम् ।
ब्रह्मणो भूषणत्वेन ग्राह्य इत्याह वल्लभः ॥१७१॥

चेतो विशुद्धिं प्राप्नोति बहिरङ्गैः शमादिभिः ।
मनने च निदिध्यासे जाते श्रवणपूर्वके ॥१७२॥

ततः प्रादुर्भवत्यत्र स्वप्रकाशः स्वयं प्रभुः ।
तेन सायुज्यमेतेषां पुरुषार्थः परो मतः ॥१७३॥

तदेवं सर्ववेदान्तान् स्वार्थे युक्तान् प्रभाष्य सः ।
ब्रह्मणः समवायित्वसाधकं सूत्रमुक्तवान् ॥१७४॥

एवं श्रीवल्लभाचार्यमतमुक्त्वा स्वभाषया ।
श्रीमद्रामानुजाचार्यमतमप्यनुगद्यते ॥१७५॥

( इति श्रीमद्वल्लभाचार्यमतनिरूपणम् । )

---

( अथ श्रीमद्रामानुजाचार्यमतानुवादः । )

तत्तु समन्वयात् ॥ ( १ अ. १ पा. ४ सू. )

ब्रह्म पक्षस्, तदित्येत् साध्यं, हेतुः समन्वयात् ।
तुकारश्च प्रसक्ताया आशङ्काया निवर्तकः ॥१७६॥

किञ्चित् प्रवर्तकं शास्त्रमास्तां किञ्चिन्निवर्तकम् ।
किन्त्वेकं तु ततो भिन्नमप्रवृत्तिनिवृत्तिकम् ॥१७७॥

वेदान्तशास्त्रमेकं तत् सिद्धस्यार्थस्य शासकम् ।
यन्न प्रवर्तकं, नापि कचिद् दृष्टं निवर्तकम् ॥१७८॥

तत्तु केवलमेकस्य सिद्धरूपस्य वस्तुनः ।
ब्रह्मणः प्रतिपादित्वाद् [1]अन्येषां मूर्धनि स्थितम् ॥१७९॥

ततो ब्रह्मेदमखिल – जगज्जन्मादिकारणम् ।
शास्त्रप्रमाणकं सिद्धं हेतोरत्र समन्वयात् ॥१८०॥

नानाविधानां वाक्यानामभिधेयः परात्परः ।
परमः पुरुषार्थोऽस्ति यो ब्रह्मेत्यभिधीयते ॥१८१॥

अभिधेयं परं ब्रह्म शास्त्रं तस्याभिधायकम् ।
अभिधेयाभिधायित्वसम्बन्धश्च समन्वयः ॥१८२॥

तस्मात् समन्वयाद् ब्रह्म नित्यं शास्त्रप्रमाणकम् ।
प्रमाणान्तरगम्यत्वमेतेनैतस्य वारितम् ॥१८३॥

अप्रवृत्तिनिवृत्त्यर्थे शास्त्रे सिद्धार्थवाचिनि ।
प्राप्ता निष्फलता चात्र तैरेवं विनिवार्यते ॥१८४॥

लोके सिद्धार्थवाचीनि वाक्यान्यपि पदे पदे ।
सफलान्येव दृष्टानि, निष्फलानि न कुत्रचित् ॥१८५॥

"जातोऽस्ति भवतः पुत्रः" – इति वस्त्वभिधायकम् ।
वचनं जनयत्येव पितुरानन्दमद्भुतम् ॥१८६॥

---

१. शास्त्राणामिति शेषः ।

"नायं सर्पः, परं रज्जु" – रिति वस्त्वभिधायकाद् ।
वचनाद् भीतभीतस्य भयं दूरात् पलायते ॥१८७॥

"भवतो वेश्मनः कोणे वर्तते निधिरव्ययः" ।
इति सिद्धवचः श्रुत्वा गृही हृष्टः प्रवर्तते ॥१८८॥

मार्गाद् भ्रष्टोऽपि, वर्षेभ्यः परं, राजसुतः पितुः ।
श्रुत्वाऽभियुक्तपुरुषात् प्रवृत्तिमतिहृष्यति ॥१८९॥

राजाऽपि तनयं ज्ञात्वा सर्वशास्त्रविशारदम् ।
जीवन्तमाप्तसर्वार्थ इव धावति तं प्रति ॥१९०॥

अतः प्रवर्तकं मास्तु, मास्तु शास्त्रं निवर्तकम् ।
तथापि पुरुषार्थेऽस्य सिद्धा पर्यवसायिता ॥१९१॥

न ह्युपच्छन्दनार्थानि वाक्यान्येतानि तन्मते ।
वाक्यार्थबोधे संवृत्ते ब्रह्मसद्भावनिश्चयात् ॥१९२॥

जाते वाक्यार्थबोधे तु यद्यभावोऽस्ति वस्तुनः ।
अप्रमाणं तदा वाक्यं तदुपच्छन्दनार्थकम् ॥१९३॥

युक्तास्तु श्रुतिवाक्यानामनुरोधेन केवलम् ।
सर्वज्ञं सिद्धसङ्कल्पं सत्यं ब्रह्म प्रपेदिरे ॥१९४॥

अतः शास्त्रमिदं सिद्धं सिद्धार्थप्रतिपादकम् ।
अप्रवृत्तिनिवृत्त्यर्थं सफलं सप्रयोजनम् ॥१९५॥

"क्षेत्रज्ञानामनन्तानामानन्दजनकं परम् ।
ब्रह्मास्ती "त्यत्र विहितं श्रुतिभिस्तदुपासनम् ॥१९६॥

ज्ञानध्यानादिकं चेदं तदुपासनसाधनम् ।
येनाऽऽप्नुवन्ति क्षेत्रज्ञा ब्रह्माऽऽनन्दं सनातनम् ॥१९७॥

एवमाभाष्य सूत्रस्य सारं श्रीरामबन्धुभिः ।
निष्प्रपञ्चपरब्रह्मविषयः खण्डितो विधिः ॥१९८॥

---

( निष्प्रपञ्चब्रह्मविषयकविधिखण्डनम् । )

न हि वेदान्तवाक्यं ते विधिवाक्यतया क्वचित् ।
नियोजकतया किंवा स्वीकुर्वन्ति विपश्चितः ॥१९९॥

विधित्वे वा नियोगत्वे नियोज्यं, विषयस्तथा ।
इतिकर्तव्यता, कर्ता, करणं चास्त्यपेक्षितम् ॥२००॥

तदेतत् किञ्चिदप्यस्मिन् पक्षे नैव प्रसिध्यति ।
तस्मान्न विधिवाक्यत्वं श्रुतेः कस्याश्चनेष्यते ॥२०१॥

( ब्रह्मध्यानविषयकविधिखण्डनम् ॥ )

"आत्मा वा अर" इत्यादौ वाक्ये यद्यपि दृश्यते ।
विधानं श्रवणस्यैवं मननध्यानयोरपि ॥२०२॥

तथापि नहि ते तस्य मन्वते विधिवाक्यताम् ।
विधित्वे तु निदिध्यासो विहितः स्यात् स्वभावतः ॥२०३॥

विहिते तु निदिध्यासे निदिध्यास्यमपेक्ष्यते ।
ध्येयं च तन्निदिध्यास्यं सदसद्वेति संशयः ॥२०४॥

यद्यसत् स्यान्निदिध्यास्यं तदा ध्यानं मृषा भवेत् ।
श्रवणं मननं बद्वद् असतः स्यादनर्थकम् ॥२०५॥

बालातुरेभ्यो वचनं यथोपच्छन्दनार्थकम् ।
मृषा भवति, तद्वद् भो, ध्यानवाक्यं मृषा भवेत् ॥२०६॥

सत्ये सति निदिध्यास्ये ध्येये वस्तुनि तु स्थिते ।
विधानं वा नियोगो वा निष्फलः सिद्धसाधनात् ॥२०७॥

असिद्धमेव विधिना साध्यते बहुसाधनम् ।
सिद्धं न साध्यतामेति विरोधात् सिद्धसाध्ययोः ॥२०८॥

यत् सिद्धं तन्न वै साध्यं, साध्यं सिद्धं न कुत्रचित् ।
सिद्धता साध्यता चेति द्वयं नैकत्र तिष्ठति ॥२०९॥

तस्मान्न ध्यानविधिना लब्धवन्त्येकवाक्यताम् ।
प्रमाणं ब्रह्मवाक्यानीत्येष तेषां विनिर्णयः ॥२१०॥

वेदान्तशास्त्रं सकलं स्वतन्त्रं ब्रह्मबोधकम् ।
अतो ब्रह्मेह गदितं स्वतः शास्त्रप्रमाणकम् ॥२११॥

अविद्यामूलतामुक्त्वा भेदज्ञानस्य तैः पुनः ।
खण्डितं भास्करप्रोक्तं भेदाभेदात्मकं मतम् ॥२१२॥

"वेदान्तोक्तपदार्थस्य यथार्थज्ञानमात्रतः ।
प्रतिबन्धा निवर्तन्ते नित्यो मोक्षश्च सिध्यति ॥२१३॥

अनुत्पाद्यस्तथाऽप्राप्यो मोक्षोऽयं निगमोदितः ।
अविकार्यस्तथैवायमसंस्कार्योऽपि सम्मतः ॥२१४॥

अतश्चायमसाध्योऽस्ति नित्यो मोक्षः सनातनः ।
न हि वेदान्तवाक्यार्थज्ञानादेष प्रसिध्यति ॥२१५॥

वेदान्तोक्तपदार्थस्य ज्ञानात्तु विनिवर्तते ।
प्रतिबन्धस्ततो मोक्षः स्वयं सिद्धोऽनुभूयते" ॥२१६॥

इत्येष यश्च सिद्धान्तः शङ्कराचार्यसम्मतः ।
सोऽपि तैः खण्डयाञ्चक्रे ध्यानविध्यनुसारिभिः ॥२१७॥

ध्यानविध्येकवाक्यत्वं खण्डयित्वा ततः स्तुतम् ।
ब्रह्मप्राप्तेरुपायत्वं ध्यानोपासनकर्मणाम् ॥२१८॥

मत्वापि पूर्वमीमांसां पूर्वाङ्गं जैमिनीरिताम् ।
व्यासोक्तामुत्तराङ्गं च चतुरध्यायसम्मिताम् ॥२१९॥

अहो ते विधिवाक्यैकवाक्यतायास्तु खण्डने ।
तथा प्रवृत्ता अभवन् यथा श्रीशङ्करोऽभवत् ॥२२०॥

अतः श्रीशङ्कराचार्यमतमप्यत्र सङ्ग्रहात् ।
निर्वाच्यमिति तत्प्रोक्तं यथामति निरुच्यते ॥२२१॥

( अत्र श्रीमच्छङ्कराचार्यमतानुवादः ॥ )

सर्वज्ञं सर्वजगतामुद्भवादेश्च कारणम् ।
यद् ब्रह्म, तदिह प्रोक्तं [1]तदा पक्षतयेप्सितम् ॥२२२॥

शास्त्रप्रमाणकत्वं च साध्यमत्र विवक्षितम् ।
अनुक्तमपि तत्साध्यमध्याहार्यं तथेष्यते ॥२२३॥

समन्वयादिति पदं हेतोरस्ति निदर्शकम् ।
अतस्तद् ब्रह्म वेदान्तैर्वेद्यं तत्र समन्वयात् ॥२२४॥

प्रमाणान्तरवेद्यत्वं तुकारेण निवार्यते ।
वेदान्तानां [2]तथाऽन्यार्थपरत्वमपि वार्यते ॥२२५॥

सर्ववेदान्तवाक्यानां तात्पर्यं ब्रह्मणि स्थितम् ।
समन्वितानि दृष्टानि यतो ब्रह्मणि केवले ॥२२६॥

न हि कस्यचिदप्यत्र कर्तृत्वं कर्मता तथा ।
श्रुतिवाक्येन केनापि कथञ्चित् प्रतिपाद्यते ॥२२७॥

तथा हि–" न च तेषां कर्तृस्वरूपप्रतिपादनपरताऽवसीयते, –तत्केन कं पश्येत् – इत्यादिक्रियाकारकफलनिराकरणश्रुतेः " इति व्याख्यात्रयोपेतश्रीभाष्यपुस्तकस्य ६३ पृष्ठे ॥

तत्केन कमिति श्रुत्या कारकत्वं निषिध्यते ।
सर्वब्रह्मात्मभावश्च विशेषेणावगम्यते ॥२२८॥

---

१. तच्छब्देनेत्यर्थः । २. तुनाऽन्यार्थः ।

परिनिष्ठितसद्वस्तुरूपे ब्रह्मणि सत्यपि ।
अज्ञानाद् भिन्नता लोके भासते ब्रह्मजीवयोः ॥२२९॥

तयोरभेदश्चैकत्वं सिद्धान्ते ब्रह्मजीवयोः ।
तत्त्वमस्यादिवाक्येभ्यः केवलेभ्यः प्रजायते ॥२३०॥

नानुमानं तथा किञ्चित् प्रत्यक्षं तादृगीक्षितम् ।
येनाभेदस्तथैकत्वं ज्ञायेत ब्रह्मजीवयोः ॥२३१॥

अतो ब्रह्मात्मभावोऽयं शास्त्रेणैवावबुध्यते ।
शास्त्रमात्रप्रमाणत्वं ब्रह्मणस्तेन सिध्यति ॥२३२॥

ब्रह्मात्मभावबोधाद्धि क्षीयन्ते क्लेशराशयः ।
सर्वक्लेशक्षयश्चैष पुरुषार्थस्य साधकः ॥२३३॥

मा भूद् ब्रह्म ततो हेयमुपादेयं तथापि तद् ।
विज्ञातं पुरुषार्थस्य साधनायाऽलमिष्यते ॥२३४॥

[1]हेयोपादेयशून्यत्वाद् उपास्यत्वमपि श्रुतम् ।
अभेदबोधकं ज्ञेयं जीवात्मपरमात्मनोः ॥२३५॥

लोकसिद्धे ह्युपास्यत्वे ब्रह्मण्यङ्गीकृते तु भोः ।
उपासकानां पार्थक्यमङ्गीकार्यमुपास्यतः ॥२३६॥

तथात्वे चाद्वितीयत्वमभेदश्च श्रुतौ श्रुतः ।
व्याहन्येत, न कस्यापि यश्चेष्टो धिषणावतः ॥२३७॥

---

१. "हानोपादानशून्यत्वाद्" – इति श्रीमद्भारतीकृष्णतीर्थशङ्कराचार्यचरणसम्मतः पाठः ।

तस्मात्सर्वेऽपि वेदान्ताः केवलैकत्वबोधने ।
ब्रह्मणः पर्यवस्यन्ति यन्मानान्तरदुर्गमम् ॥२३८॥

( अत्र श्रीमन्मीमांसकाचार्याः )

केचिन्मीमांसकाचार्या मन्त्रब्राह्मणपूर्वकम् ।
समग्रोपनिषद्भागं प्राहुराम्नायसंज्ञकम् ॥२३९॥

तस्मिन्नाम्नायवाच्येऽर्थे श्रुतयोऽन्तर्भवन्त्यतः ।
तासां श्रुतीनां सार्थक्यं क्रियार्थत्वाद् ब्रुवन्ति ते ॥२४०॥

जिज्ञासितव्योऽन्वेष्टव्यः श्रोतव्यश्चेति शासनैः ।
क्रियाभाव्यं क्रियासाध्यं ब्रह्मात्मानं वदन्ति ते ॥२४१॥

श्रवणान्मननाच्चैव निदिध्यासाद् विशेषतः ।
ब्रह्म भाव्यमुपास्यं च धर्मकार्यमुशन्ति ते ॥२४२॥

ज्ञानादिविधिशेषत्वमुक्त्वैवं ब्रह्मणि स्थिरे ।
जीवब्रह्मात्मभावस्य भावत्वं भावयन्ति ते ॥२४३॥

एवं ते पूर्वमीमांसाक्रममाश्रित्य केवलम् ।
सर्ववेदान्तशास्त्राणां समीहन्ते समन्वयम् ॥२४४॥

( अत्र मीमांसकमतखण्डनम् । )

तत्र प्रत्यवतिष्ठन्ते शङ्कराचार्यसूरयः ।
तानेवानुसरन्तश्च सन्ति रामानुजादयः ॥२४५॥

प्रख्यापयितुमात्मीयमुत्कर्षं किन्तु कञ्चन ।
क्वचित् क्वचित्ते वैमत्यमपि प्राचीकटन्निजम् ॥२४६॥

ते ब्रह्मपक्षमाक्षिप्य सूत्रस्थेन तदा पुनः ।
शास्त्रप्रमाणकत्वं हि साध्यमाहुर्मनीषिणः ॥२४७॥

शङ्करस्तु [1]तदा ब्रह्म पक्षमुक्त्वैव केवलम् ।
साध्यं शास्त्रप्रमाणत्वमाक्षेपेणाधिगच्छति ॥२४८॥

तदेवं मतभेदं स्वं समुद्भाव्यापि शाङ्करे ।
शास्त्रप्रमाणकत्वे तु सम्मता रामबन्धवः ॥२४९॥

शङ्करोक्तदिशैवैते ब्रह्मणः शास्त्रगम्यताम् ।
निरूच्य, विधिशेषत्वं दूषयामासुरादरात् ॥२५०॥

दूषणप्रक्रिया सा च पूर्वमुक्ताऽप्यनूदिता ।
पुनरत्र समासेन यथामति निरूप्यते ॥२५१॥

धर्मे ब्रह्मात्मभावे च वर्तते महदन्तरम् ।
अतो न धर्ममीमांसा ब्रह्मभावोपकारिणी ॥२५२॥

धर्ममीमांसया पूर्वं कार्यरूपं निरूप्यते ।
निरूपितक्रमेणैव ततः कार्यं विधीयते ॥२५३॥

कर्मणां साध्वनुष्ठानात् परं धर्मः प्रजायते ।
स धर्मः सुखरूपं च प्रसूते क्षणिकं फलम् ॥२५४॥

---

१. तदा = तच्छब्देन ।

धर्मज्ञानमनुष्ठानं धर्मस्तज्जं सुखादिकम् ।
तदेवं सकलं भाव्यं जन्यं नश्यं च सिध्यति ॥२५५॥

जीवब्रह्मात्मभावस्तु तादृशो नैव विद्यते ।
न भाव्यते न केनापि जन्यते नापि नश्यति ॥२५६॥

नित्याममभाव्यां तामेतां जीवब्रह्मात्मभावनाम् ।
नैवानुशास्ति कुत्रापि श्रुतिर्भावयितुं पराम् ॥२५७॥

यत्र यत्र च विध्यर्थाः प्रत्ययाः श्रुतिगोचराः ।
तत्र सर्वत्र ते सर्वे विधिसारूप्यबोधकाः ॥२५८॥

विधिसारूप्यमेतच्च सिद्धार्थस्यानुवादकम् ।
सिद्धार्थस्यानुवादित्वे भाव्यत्वं च निवर्तते ॥२५९॥

जिज्ञासितव्यो द्रष्टव्यः श्रव्यश्चेत्येवमादयः ।
प्रयोगाः ख्यापयन्त्येकमभेदं ब्रह्मजीवयोः ॥२६०॥

तज्जीवब्रह्मणोरैक्यं जीवब्रह्मात्मभावनम् ।
नित्यो मोक्षो, न सा सम्पद् न चाध्यासो न संस्कृतिः ॥२६१॥

न स कार्यो न वा वेद्यो दृश्यो वाच्योऽपि नास्त्यसौ ।
नोपासनीयो नाराध्यः साध्यो बाध्यो न कस्यचित् ॥२६२॥

नोत्पाद्यो न विकार्यश्च ध्येयो गेयो न कस्यचित् ।
नैवाप्यो नैव संस्कार्यो ब्रह्मभावः सनातनः ॥२६३॥

ब्रह्मभावो हि वेदान्ते मोक्षः प्राज्ञैः प्रकीर्तितः ।
व्यक्तितन्त्रो न चाप्येष विधितन्त्रो न वा क्वचित् ॥२६४॥

सिद्धवस्तुस्वरूपस्य ब्रह्मभावस्य भावनाम् ।
उत्पादयितुमेतन्नः कथं शास्त्रं प्रवर्तयेत् ॥२६५॥

अतो हि यत्र कुत्रापि विध्यर्थः प्रत्ययो भवेत् ।
भावनोत्पादनार्थत्वं ततस्तस्य निवार्यताम् ॥२६६॥

सिद्धवस्तुप्रशंसायां प्रयुक्त इति बुध्यताम् ।
सिद्धश्च केवलो ब्रह्मभाव इत्यवधार्यताम् ॥२६७॥

यथा ह्युपलशैलेषु सम्प्रयुक्ताः क्षुरादयः ।
कुण्ठीभवन्ति तद्वद् भो ब्रह्मभावे लिङादयः ॥२६८॥

सदासिद्धात्मनि ब्रह्मभावे नैव लिङादयः ।
विधिज्ञानविधिज्ञान् वा प्रवर्तयितुमीशते ॥२६९॥

विधिच्छायामुपेतास्ते लोकानथ बहिर्मुखान् ।
कृत्वा त्वन्तर्मुखान् बाढं व्रजन्ति कृतकृत्यताम् ॥२७०॥

ननुशास्त्रप्रमेयत्वं ब्रह्मणः प्राक् प्रतिश्रुतम् ।
सूत्रेण शास्त्रयोनित्वादित्येतेन विशेषतः ॥२७१॥

तत् कथं तदवेद्यं स्यान्न च स्याद् विषयो धियः ।
इति चेदुच्यते, शास्त्रं न साक्षाद् ब्रह्मबोधकम् ॥२७२॥

अज्ञानाद् भासमानानां पदार्थानां विभिन्नताम् ।
साक्षात् स्वभावतः शास्त्रं निवर्तयति कल्पिताम् ॥२७३॥

निवृत्ते भेदभावे च सर्वोपादानकारणम् ।
केवलं सकलं ब्रह्म स्वयमेव विराजते ॥२७४॥

अमी सर्वेऽपि वेदान्ता अहङ्कारात् समुत्थितान् ।
कल्पितान् सकलान् भेदान् निरस्यन्ति समन्विताः ॥२७५॥

ततश्च ब्रह्मभावोऽयं स्वयमेव प्रकाशते ।
अतः शास्त्रप्रमेयत्वं ब्रह्मणः प्रतिपाद्यते ॥२७६॥

सिद्धवस्तुस्वरूपस्य ब्रह्मणश्चास्य मानसः ।
प्रत्ययोऽनुभवो वा यः स प्रकाश उदीर्यते ॥२७७॥

निर्मले द्वैतरहिते तस्मिन् मनसि दर्पणे ।
स्वाभाविकोऽयमुदितः प्रकाशो ज्ञानमुच्यते ॥२७८॥

तज्ज्ञानं न क्रियातन्त्रं व्यक्तितन्त्रं न विद्यते ।
न कचिद् विधितन्त्रं वा; वस्तुतन्त्रं हि केवलम् ॥२७९॥

तद् वस्तु केवलं ब्रह्म स्वतःसिद्धं सनातनम् ।
न शेषतामिदं याति विधिवाक्यस्य कस्यचित् ॥२८०॥

केवलोपनिषद्वाक्यैरस्य कूटस्थनित्यता ।
एकता, समता, सर्वभूतस्थत्वं च बुध्यते ॥२८१॥

शुद्धबुद्धसदामुक्तस्वभावमिदमव्ययम् ।
वेदवेद्यमतः सिद्धं सर्वोपनिषदीरितम् ॥२८२॥

"रज्जुरेषा, न सर्पोऽयम् ", इति वाक्यं यथा भयम् ।
तथैव भूतवस्तूक्तिः संहरेन्मानसं भ्रमम् ॥२८३॥

"अहमस्मि", "ममेदं च शरीरम्"—इति कल्पना ।
तत्त्वमस्यादिभिर्वाक्यैः समूलं विनिहन्यते ॥२८४॥

समूलं हन्यमानायां कल्पनायां तु तादृशि ।
जीवतः सशरीरस्याप्यशरीरत्वमिष्यते ॥२८५॥

ब्रह्मविज्जायते ब्रह्म ब्रह्मैवेदं तथाऽखिलम् ।
अहंममेति धीस्तस्य ब्रह्मज्ञस्य कथं भवेत् ॥२८६॥

'अहमस्मि' 'शरीरं मे'—इत्याद्याः प्रत्ययाः सतः ।
नश्यन्ति जीवतस्तस्माद्—अशरीरः स उच्यते ॥२८७॥

सुखिते दुःखिते वाऽस्मिन् शरीरे ब्रह्मवेदिनः ।
हर्षः शोकोऽथवा नैव कदाचिदपि तं स्पृशेत् ॥२८८॥

अतोऽशरीरत्वमतिर्मोक्षः शास्त्रेषु गीयते ।
शरीरत्वमतेः किं वाऽप्यभावो मोक्ष ईर्यते ॥२८९॥

शरीरित्वमतिर्नाऽभूत् प्राक् शरीरस्य सम्भवात् ।
ध्वंसात् परं शरीरस्य सा च दृष्टा न कुत्रचित् ॥२९०॥

शरीरसम्भवात् पश्चात् क्रमशश्च शनैः शनैः ।
'अहं, मम शरीरं चे' – त्येवं भावा भवन्ति नः ॥२९१॥

अतो हि यस्य नैवास्ति 'अहं देही 'ति भावना ।
स बालो गृहमध्यस्थान्न बिभेति हुताशनात् ॥२९२॥

सोऽयं भावः 'शरीरी 'ति तावदेवात्र तिष्ठति ।
यावन्न विलयं यान्ति क्षीणाः प्राणादिवायवः ॥२९३॥

प्राणादिषु विनष्टेषु वायुष्वपि च देहतः ।
'ममायं देह' इत्येवं न धीः कस्यापि लक्षिता ॥२९४॥

अतः खनन्ति तं केचिन्निर्दहन्ति च केचन ।
केचिच्च कुर्वते भक्ष्यं कुम्भीरपशुपक्षिणाम् ॥२९५॥

एतेनाहं शरीरीति भावना न सनातनी ।
आदौ नास्ति न चान्तेऽस्ति मध्ये भ्रान्त्यैव भासते ॥२९६॥

तस्माद् यस्तु विशेषज्ञो ब्रह्म जानाति मानवः ।
शरीरित्वमतेर्लोपात् स जीवन्नेव मुच्यते ॥२९७॥

तस्मान्मोक्षोऽशरीरत्वं जीवतोऽपि प्रसिध्यति ।
स नित्यो, न समुत्पाद्यः कर्तव्यो न क्रियाशतैः ॥२९८॥

( पूर्वपक्षः )

ज्ञाते ब्रह्मणि, नष्टायां क्रियेच्छायामकर्मकृत् ।
न जह्यान्नाप्युपादद्यात् किञ्चित् कर्मपराङ्मुखः ॥२९९॥

एवं कर्तव्यताहानौ पतितो ब्रह्मविद् भवेत् ।

( उत्तरः पक्षः )

इति चेन्न तथा वाच्यं साऽवस्था स्तूयते श्रुतौ ॥३००॥

आत्मरूपस्य विज्ञाता ब्रह्मविद् ब्रह्मणि स्थितः ।
निरीहो नैव कामाय कस्मैचित् स प्रवर्तते ॥३०१॥

अतो हि कृतकृत्योऽसौ गीतायां गदितः पुमान् ।
सर्वकर्तव्यताहानिरलङ्कारश्च तद्विदः ॥३०२॥

तस्मान्न कस्यापि विधेर्विषयो ब्रह्म जायते ।
ब्रह्मज्ञाने न कस्यापि कर्मणश्चास्त्यपेक्ष्यता ॥३०३॥

( ब्रह्मणः केवलोपनिषद्गम्यत्वम् )

प्रवर्तकविधेः क्वापि निवर्तकविधेस्तथा ।
शेषत्वं ब्रह्मणः काऽपि नैवोपनिषदाह नः ॥३०४॥

यमाहोपनिषद् ब्रह्म स पुमाँस्तु विलक्षणः ।
सर्वसाक्षी समश्चैको नित्यः कूट इव स्थितः ॥३०५॥

सर्वभूतस्थितः सोऽसौ नैवाऽन्यत्र कचित् स्तुतः ।
केवलोपनिषद्भागे स्तूयमानः स दृश्यते ॥३०६॥

तादृशस्यास्य सत्तां च प्रतिवक्तुं क ईश्वरः ।
यस्तूपनिषदः सर्वा आम्नायत्वेन मन्यते ॥३०७॥

स पुमानविनाशी च विक्रियाहेतुवर्जितः ।
नित्यः शुद्धश्च बुद्धश्च मुक्तश्चास्ति स्वभावतः ॥३०८॥

नहि तस्मात् परं किञ्चित् स सर्वेषां गतिः परा ।
नैवाहंप्रत्ययज्ञेयस्तत्साक्षित्वेन वर्णनात् ॥३०९॥

तमौपनिषदं प्राहुराचार्याः पुरुषं परम् ।
नैवोपनिषदोऽन्यत्र दृश्यते वर्णनं यतः ॥३१०॥

( उपनिषदां क्रियार्थत्वाभावः )

त्यक्त्वोपनिषदां भागमाम्नायाऽन्यः क्रियार्थकः ।
नैवोपनिषदाम्नायः क्रियार्थः कैश्चिदिष्यते ॥३११॥

स तूपनिषदाम्नायो ब्रह्मात्मानं निराकुलम् ।
तथैवोपदिशन् भाति येनाज्ञानं निवर्तते ॥३१२॥

संसारबन्धहेतुर्यो ह्यहङ्कारोऽतिदुःखदः ।
तन्निवर्तनमेवास्य प्रयोजनमुदीर्यते ॥३१३॥

एवंभूताऽऽत्मतत्त्वस्य ह्युपदेशोऽयमस्ति यः ।
सार्थकः स तु विज्ञेयः क्रियासाधनवस्तुवत् ॥३१४॥

"ब्राह्मणो नैव हन्तव्यः" – इति वाक्यं यथाऽर्थवत् ।
भूतवस्तूपदेशोऽपि तथा भवति [1]चार्थवान् ॥३१५॥

---

१. "सार्थकः" इति पाठान्तरम् ।

पुरुषार्थोपयोगीनि ह्युपाख्यानान्यपीह तु ।
सार्थकान्येव बोध्यानि न निरर्थानि कानिचित् ॥३१६॥

"रज्जुरेषा, न सर्पोऽयम्"– इति वस्तूपदेशनम् ।
सप्रयोजनमेवास्ति सर्पभीतेर्निवारणात् ॥३१७॥

तथाऽऽत्मवस्तुमात्रस्य भूतस्यात्रोपदेशनम् ।
सप्रयोजनमेवास्ति – ह्यहङ्कारनिवर्तनात् ॥३१८॥

विज्ञातब्रह्मभावस्य [1]ह्यहङ्कारो निवर्तते ।
अहंकारी न जानाति, शुद्धब्रह्मात्मभावनाम् ॥३१९॥

सर्पबुद्ध्या पुरा भीतो रज्ज्वा अपि सुमन्दधीः ।
विज्ञातायां यथा रज्ज्वां न बिभेति मनागपि ॥३२०॥

तथाऽहंकारवाञ्जीवस्तावदेवात्र दूयते (खिद्यते) ।
यावन्न स ह्यहंकारं ब्रह्मभावेन मुञ्चति ॥३२१॥

धनापहारे धनिकः खिद्यमानो हि दृश्यते ।
स एव त्यक्तसंसर्गो निर्धनोऽपि प्रसीदति ॥३२२॥

कुण्डलाभ्यां यथा बालः सुखी लोके प्रदृश्यते ।
ताभ्यां विनाऽप्यसौ प्राज्ञः किं न सौख्यं समश्नुते ॥३२३॥

तथाऽहंकारवान् प्राणी श्रुत्याऽर्थस्यानुचिन्तनात् ।
जीवसत्तां मृषा ज्ञात्वा ब्रह्मात्मैकत्वमृच्छति ॥३२४॥

---

१. "संसारित्वम्" इति पाठान्तरम् ।

सक्रियं सविकारं च सगुणं ब्रह्म वेत्ति सः ।
अधिष्ठानं परं ब्रह्म निर्गुणं चापि वेत्त्यसौ ॥३२५॥

तस्यास्य ज्ञानिनः पुंसः सकलानर्थकारकः ।
अहंकारः क्षयं याति जीवभावश्च जीवतः ॥३२६॥

सशरीरोऽपि जीवन् स ह्यशरीरस्तदोच्यते ।
न प्रियं चाप्रियं चोभे स्पृशतस्तं कदाचन ॥३२७॥

अशरीरत्वमेवात्र मोक्षः प्राज्ञैरुदीरितः ।
वासनाक्षयमात्रेण स च मोक्षः प्रसिध्यति ॥३२८॥

अत एव शरीरेऽस्मिन् स्थितेऽपि परमर्षिभिः ।
जीवन्मुक्तिः स्वकैः शब्दैः स्फुटाऽस्ति परिभाषिता ॥३२९॥

तथा हि–"सर्वत्र सर्वदा सर्वब्रह्ममात्रावलोकनात् ।
सद्भाववासनादार्ढ्यात् तत् त्रयं लयमश्नुते ॥
क्रियानाशे भवेच्चिन्तानाशोऽस्माद्वासनाक्षयः ।
वासनाप्रक्षयो मोक्षः सा जीवन्मुक्तिरिष्यते" ॥

( इति विवेकचूडामणिः )

अहंभावप्रधानेन कृतयोः पुण्यपापयोः ।
शरीरेणैव सम्बन्धः क्षयिणा, नान्तरात्मना ॥३३०॥

न कर्ता पुण्यपापानामात्माऽन्यः कोऽपि देहतः ।
देह एवाऽवतिष्ठन्ते समवेताः समाः क्रियाः ॥३३१॥

अतो हि धर्माधर्माणां कर्ता देहो हि केवलः ।
नैव कर्ता न वा भोक्ता देहाद् भिन्नोऽत्र कश्चन ॥३३२॥

देहो जन्यो विनाशी च परिणामी प्रतिक्षणम् ।
तस्य धर्मा गुणाश्चापि तथा जन्या विनाशिनः ॥३३३॥

जीवात्मानस्ततो भिन्ना अजन्याश्चाविनाशिनः ।
न सन्ति, केवलस्यैव ब्रह्मणः प्रतिपादनात् ॥३३४॥

ब्रह्मैवात्मा स चैकोऽस्ति नित्यः सर्वगतो विभुः ।
शुद्धो बुद्धः स्वयं मुक्तो निःसङ्गस्तैः क्रियाश्रयैः ॥३३५॥

उपादानात्मकं ब्रह्म देहरूपेण भासते ।
स चाभासो द्विधा लोके विनश्यन्निह दृश्यते ॥३३६॥

ब्रह्मभावस्य विज्ञानाद् देहाभासो विनश्यति ।
देहध्वंसात्तथाऽऽभासः स एष च विनश्यति ॥३३७॥

देहाभासे विनष्टेऽस्मिन् न प्रियाप्रिययोरिह ।
अनुमन्ताऽनुभविता वस्तुरूपोऽवशिष्यते ॥३३८॥

अतः श्रीशङ्कराचार्यसिद्धान्तेनापि सिध्यति ।
सकृज्जन्म सकृन्मृत्युः, न पुनर्जन्म कस्यचित् ॥३३९॥

अपरोक्षानुभूत्यादावत एव स्फुटैः पदैः ।
प्रारब्धं खण्डितं, मूलं यत्पुनर्जन्मनः श्रुतम् ॥३४०॥

तथा हि—" कर्म जन्मान्तरीयं यत् प्रारब्धमिति कीर्तितम् ।
तत्तु जन्मान्तराभावात् पुंसो नैवाऽस्ति कर्हिचित् ॥

स्वप्नदेहो यथाऽध्यस्तस्तथैवायं हि देहकः ।
अध्यस्तस्य कुतो जन्म जन्माभावे हि तत् कुतः ॥

देहस्यापि प्रपञ्चत्वात् प्रारब्धावस्थितिः कुतः ।
अज्ञानिजनबोधार्थं प्रारब्धं वक्ति वै श्रुतिः"
(अपरोक्षानुभूत्याम्)

"कर्मणा निर्मितो देहः प्रारब्धं तस्य कल्प्यताम् ।
नाऽनादेरात्मनो युक्तं नैवाऽऽत्मा कर्मनिर्मितः" ॥
(विवेकचूडामणिः)

"अजो नित्यः शाश्वत इति ब्रूते श्रुतिरमोघवाक् ।
तदात्मना तिष्ठतोऽस्य कुतः प्रारब्धकल्पना ॥

प्रारब्धं सिध्यति तदा यदा देहात्मना स्थितिः ।
देहात्मभावो नैवेष्टः प्रारब्धं त्यज्यतामतः ॥

शरीरस्यापि प्रारब्ध – कल्पना भ्रान्तिरेव हि ।
अध्यस्तस्य कुतः सत्त्वमसत्त्वस्य कुतो जनिः ॥

तिष्ठत्ययं कथं देह इति शङ्कावतो जडान् ।
समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः" ॥
(विवेकचूडामणिः)

न केवलाद्धि श्रवणात् केवलान्मननान्न वा ।
न केवलान्निदिध्यासाज् ज्ञानमेकं प्रकाशते ॥३४१॥

श्रवणं मननं चैतन्निदिध्यासनमेव च ।
संहृतं ज्ञानमत्राहुः स्वयं तच्च प्रकाशते ॥३४२॥

विध्यर्थाः प्रत्ययास्त्वत्र प्रायोऽर्हत्वे प्रयोजिताः ।
अतो न विधिशेषत्वकल्पनावसरो मनाक् ॥३४३॥

अतो न पूर्वमीमांसा ब्रह्मरूपनिरूपणे ।
समर्थेति पृथक् शास्त्रं बादरायणनिर्मितम् ॥३४४॥

तदीयेन चतुर्थेन सूत्रेणैतच्च गम्यते ।
सर्वोऽप्युपनिषद्भागः केवलो ब्रह्मबोधकः ॥३४५॥

निर्विवक्षितमत्रास्ति यत्तु ब्रह्म सनातनम् ।
शास्त्रमात्रप्रमाणेन तत्तु गम्यं, न चान्यथा ॥३४६॥

शास्त्रत्वेनोपनिषदः सङ्ग्राह्याश्च विशेषतः ।
इत्येतेषां मतं भाति मन्त्राश्चापि तदर्थकाः ॥३४७॥

इत्येवं शङ्कराचार्यमतमत्र यथामति ।
अनूद्य किञ्चित् संक्षिप्य स्वमतं च प्रकाशये ॥३४८॥

## ( अथात्र स्वमतम् )

## ( तत्रादौ जैमिनिजिनवादौ )

यावन्तश्चेष्टया युक्ताः सन्ति देहा भुवस्तले ।
तावन्तश्च ततोऽप्यन्ये जीवाः सन्ति जगत्त्रये ॥३४९॥

स्वैः स्वैः कर्मभिरेते च पुण्यैः पापैरनुष्ठितैः ।
स्वर्गादीन्नरकादींश्च लोकानधिवसन्ति ते ॥३५०॥

ते जीवास्ते तथा लोका विविधास्ताश्च योनयः ।
नित्याः सन्तीति संसारो घटितस्तैः सनातनः ॥३५१॥

वेदोक्तकर्मकरणादपूर्वस्य च भावनात् ।
स्वर्गादींल्लभते जीव इति मीमांसका जगुः ॥३५२॥

विधीनामिह केषाञ्चिद् वेदा दृष्टाः प्रवर्तकाः ।
केषाञ्चिच्च तथा दृष्टा गर्हितानां निवर्तकाः ॥३५३॥

विहितानामनुष्ठानान्मृत्योः पश्चात् स्वरादयः ।
निषिद्धानामनुष्ठानान्नरको मरणात् परम् ॥३५४॥

न स्वर्गादुत्तमं किञ्चिल्लभ्यं वैदिककर्मणा ।
नरकान्न परं किञ्चिद् गर्हितं पापकर्मणा ॥३५५॥

तावुभौ स्वर्गनरकौ लभ्येते मरणात्परम् ।
न तौ केनापि जीवेन भुज्येते त्वत्र जीवता ॥३५६॥

किञ्चाधिकारी वेदस्य द्विजन्मैव निरूपितः ।
द्विजन्मनोऽतिरिक्तस्य नाधिकारोऽस्ति वैदिके ॥३५७॥

कुर्वन्नपि द्विजन्माऽसौ सकलं कर्म वैदिकम् ।
अपूर्वं भावयित्वाऽन्ते मृत्यौ स्वर्गं समश्नुते ॥३५८॥

क्षीणपुण्यः पुनर्जीवो मर्त्यलोकमुपाश्नुते ।
नैकान्तिकात्यन्तिकोऽसौ मोक्षो विप्रस्य सिध्यति ॥३५९॥

( अथ जिनमतानुवादः )

एतस्माद् वैदिकान्मार्गात् प्रेष्ठः श्रेष्ठश्च वर्तते ।
जिनमार्गो यमाश्रित्य मोक्षमर्हन्ति देहिनः ॥३६०॥

न केवलं द्विजस्यैव सर्वेषामेव देहिनाम् ।
अत्राधिकारो मोक्षेऽस्ति यश्चाऽऽम्नायान्न सिध्यति ॥३६१॥

आम्नायः सकलः प्रोक्तः क्रियार्थः कर्मबोधकः ।
अक्रियार्थस्य सर्वस्य प्रोक्ताऽनर्थकतर्षिणा ॥३६२॥

आम्नायस्य समग्रस्य कर्मण्येवावसादनम् ।
कर्ममात्रं च जीवानां बन्धनाय, न मुक्तये ॥३६३॥

कायेन मनसा वाचा यद् यत् कर्म कृतं भवेत् ।
तत्सर्वं जिनशास्त्रेऽस्मिन् योग आस्रव उच्यते ॥३६४॥

तथा हि–" कायवाङ्मनःकर्म योगः " " स आस्रवः " ( तत्त्वार्थ० ६ अ. १–२ सूत्रे )

योगस्य बन्धहेतुत्वं मिथ्यात्वादेरिवेरितम् ।
कर्मानुरूपदेहस्य प्राप्तिर्बन्धस्तथेरितः ॥३६५॥

तथा हि–" मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः " ( तत्त्वार्थ० ८ अ. १ सू. )

तस्यास्रवस्य योगस्य निरोधः संवरः स्मृतः ।
गुप्त्या समित्या धर्मेण साध्योऽनुप्रेक्षणेन सः ॥३६६॥

( १ अ. १ पा. ८ सू. )

परीषहजयेनैवं चारित्रेण ततः परम् ।
तपोभिश्च विशेषेण संवरः स प्रजायते ॥३६७॥

तथा हि–" आस्रवनिरोधः संवरः " ( तत्त्वार्थ० ९ अ. १ सू. )॥
" स गुप्ति–समिति – धर्मानुप्रेक्षापरीषहजयचारित्रैः "
( तत्त्वार्थ० ९ अ. २ सू. ) " तपसा निर्जरा च "
( तत्त्वार्थ० ९ अ. ३ सू )

ततश्च निर्जरा, पश्चाद् मोक्षो जीवस्य सिध्यति ।
दर्शनज्ञानचारित्र – सम्यक्त्वं यस्य साधकम् ॥३६८॥

मोहक्षयात्तथा ज्ञानदर्शनावरणक्षयात् ।
अन्तरायक्षयाच्चास्य केवलत्वं प्रसिध्यति ॥३६९॥

तथा हि–" मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम् "
( तत्त्वार्थ० १० अ. १ सू )

वन्धहेतोरभावेन निर्जरायाश्च सम्भवात् ।
मुक्तो जीवः प्रयात्युच्चैरालोकान्तमबाधितः ॥३७०॥

तथा हि–" वन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः "
( तत्त्वार्थ० १० अ. २ सू. )

तथा हि–" तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् " । ( तत्त्वार्थ० १० अ. ५ सू. )

न स मुक्तः कदाप्येतं लोकाकाशं भवाभिधम् ।
लाघवात् पुनरभ्येति धर्माधर्मादिभिर्घनम् ॥३७१॥

तथा हि–" पूर्वप्रयोगाद्, असङ्गत्वाद्, बन्धच्छेदाद्, तथागतिपरिणामाच्च"।। "आविद्धकुलालचक्रवद्, व्यपगतलेपालाबुवद्, एरण्डबीजवद्, अग्निशिखावच्च"।। "धर्मास्तिकायाभावात्"।। ( तत्त्वार्थ० १० अ. ६, ७. ८ सूत्राणि )

अहो वैदिकमार्गे तु पुण्यनाशात् पुनर्भवः ।
मोक्षः श्रीजिनमार्गे च पुण्यपापोभयक्षयात् ।।३७२।।

तस्मादेष प्रशस्तोऽस्ति मोक्षः श्रीजिनसम्मतः ।
न ते स्वर्गादयो येभ्यः पतनं पुण्यसंक्षयात् ।।३७३।।

इत्येवं जीववादस्य स्वीकारे चतुरा अपि ।
जैनागमेन जीयन्ते जैमिनीयागमे रताः ।।३७४।।

जीववादमहातीक्ष्णदंष्ट्राघातातिभीषणः ।
जैनागममहाराहुर्ग्रसते वैदिकं विधुम् ।।३७५।।

जीवनित्यत्ववादेन सहाऽपूर्वस्य कल्पकः ।
क्षणिकस्वर्गफलको मीमांसकशिरोमणिः ।।३७६।।

कथमेतानहो वेदान् ज्ञानविज्ञानसन्निधीन् ।
चर्विताञ्जीववादेन गोपायितुमलं भवेत् ।।३७७।।

( अथोत्तरपक्षोपक्रमः )

इति मत्त्वेव, मन्येऽहं, साङ्ख्याचार्यपुरस्कृतैः ।
योगाचार्यैः प्रदिष्टोऽयं योगमार्गो दिवाकरः ।।३७८।।

न योगे न तथा सांख्ये जीवास्तित्वं प्रदृश्यते ।
अभावान्नित्यजीवस्य कर्मबन्धो न कस्यचित् ॥३७९॥

न जीवो नाम कोऽप्यत्र कर्ता तादृग् विलोक्यते ।
यो नित्यः सन् स्वयं कुर्याद् बद्धः स्याच्च स्वकर्मभिः ॥३८०॥

क्षणिकैः क्रियते कर्म शरीरैः क्षणिकं तथा ।
क्षणिकं तत्फलं चैव क्षणिकैरेव भुज्यते ॥३८१॥

अतो न कोऽपि तत्रास्ति कर्ता तत्पुण्यपापयोः ।
यत्फलं देहविध्वंसात् परं कोऽपि समश्नुताम् ॥३८२॥

एवं निरस्य जीवानां नित्यास्तित्वं, मृतेः परम् ।
कर्मणां प्रक्षयान्मोक्षो दूरमेवापसारितः ॥३८३॥

( अत्र योगसिद्धान्तसारसमुद्धारः )

दृशिमात्रः स्वयं शुद्धो द्रष्टा कोऽपीह मन्यते ।
भूतेन्द्रियात्मकं दृश्यं तस्माद् भिन्नमुदीर्यते ॥३८४॥

तथा हि—"द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः" ॥ ( योगद. २ पा. २० सू. ) "प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्" ॥ ( यो. द. २ पा. १८ सू. )

उभयोरेव संयोगाज्जगदेतत् प्रजायते ।
विवेकस्योदयादेव तयोर्भेदश्च गम्यते ॥३८५॥

भेदज्ञानात् सुखं दुःखं न कस्यापीति निश्चयात् ।
जीवन्नेव स्वयं मुक्तो विवेकी केवलो भवेत् ॥३८६॥

असत्ये सत्यताबुद्धिरशुचौ शुचिभावना ।
दुःखे सुखमतिः सेयमविद्या विकृते स्थिता ॥३८७॥

विकृतं च समग्रं तद् दृश्येऽन्तर्भावमर्हति ।
दृश्यं च सर्वथा भिन्नं द्रष्टुः शुद्धात् परात्परात् ॥३८८॥

विद्योदयादविद्याया विनाशात् सुसमाहितः ।
तमिमं भेदमालोक्य दृशिकैवल्यमश्नुते ॥३८९॥

अविप्लवामतः प्राहुर्हेयहानोपकारिणीम् ।
विवेकख्यातिमाचार्याः दृशिकैवल्यसाधिनीम् ॥३९०॥

योगाङ्गानामनुष्ठानाद्, अशुद्धेः सर्वथा क्षये ।
विवेकख्यापकं ज्ञानं स्वयमेव प्रकाशते ॥३९१॥

सम्यग् ज्ञानमिदं, यस्य सञ्जातेऽधिगमे जनः ।
यावद्देहं स्वयं प्राप्ते धर्म एव प्रवर्तते ॥३९२॥

तथा हि–" सम्यग् ज्ञानाधिगमाद् धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमिवद् धृतशरीरः "
॥ सां. का. ६७ ॥

देहभेदे ततो जाते दैहिकाः परमाणवः ।
लीयन्ते प्रकृतौ, जीवस्ततो नैवावशिष्यते ॥३९३॥

घटाकाशस्य निर्माणे कारणं यो घटो भवेत् ।
तस्य ध्वंसाद् घटस्यैव घटाकाशोऽपि नश्यति ॥३९४॥

तथैव देहविध्वंसाद् दैहिकः कल्पितः पुमान् ।
प्रलीनः परमे पुंसि न पृथग्भावमर्हति ॥३९५॥

तदेवं द्विविधो मोक्षः शास्त्रसञ्चिन्तनान्मतः ।
प्रथमो जीवतः प्रोक्तो द्वितीयो मरणात् परः ॥३९६॥

देहक्षयात् परो मोक्षः सर्वसाधारणो मतः ।
न तदर्थं बुधः कोऽपि प्रयत्नमनुतिष्ठति ॥३९७॥

सुधिया तु सदा साध्यो जीवन्मोक्षोऽतिदुर्लभः ।
येनात्यन्तिक आनन्दो जीवतैवानुभूयते ॥३९८॥

साङ्ख्ययोगोपदेष्टारस्तदेवं द्वितयं परम् ।
प्रधानपुरुषोपाख्यं [1]दृश्यद्रष्ट्रात्मकं जगुः ॥३९९॥

वेदेषु स्तूयमाना ये – इन्द्राग्निमरुदादयः ।
वसुरुद्रादितेयाश्च दृश्येष्वन्तर्भवन्ति ते ॥४००॥

तेषां वैदिकदेवानां श्रद्धया समुपासनात् ।
विवेकस्तात्त्विकज्ञानकारणं चारु जायते ॥४०१॥

जाते विवेके निर्भ्रान्ते ज्ञानविज्ञानवान्नरः ।
प्रवृत्तः केवले धर्मे जीवन्मोक्षं प्रपद्यते ॥४०२॥

---

१. "द्रष्टृदृश्यात्मकं विदुः" । इति पाठान्तरम् ।

( अथोपसंहारः )

तदेवं जीववादेन पुनर्जन्मानुबन्धिना ।
भक्षिताश्चर्विता वेदा योगैः साङ्ख्यैश्च रक्षिताः ॥४०३॥

सांख्ययोगाधिगमनाद् वेदार्थाः प्रादुरासते ।
वेदान्तार्थोऽपि निःशङ्को हस्तस्थामलकायते ॥४०४॥

नन्वेवं सांख्ययोगाभ्यां वेदान्तार्थे प्रकाशिते ।
कृतं पुनर्ब्रह्मसूत्रैर्वेदव्यासविनिर्मितैः ॥४०५॥

इति चेद् ब्रह्मसूत्राणां सार्थकत्वं निशम्यताम् ।
न हि तत् सांख्ययोगानां प्रतिवादात् प्रसेत्स्यति ॥४०६॥

वैदिकान् सकलान् देवान् दृश्येऽन्तर्भाव्य योगिनः ।
प्रकृतौ च परे सांख्यास्तद्विवेकं प्रतुष्टुवुः ॥४०७॥

तज्जलानिति संज्ञाभिः सच्चिदानन्दनामभिः ।
भूतभव्यभवच्छब्दैर्वेदान्तास्तानथास्तुवन् ॥४०८॥

तथा हि–" सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्त उपासीत० "
( छान्दोग्य० ३ प्रपा. १४ खण्डः )

इदमा सर्वशब्देन किञ्चैते वैदिकाः सुराः ।
वेदान्तेषु त्वनेकत्र दृश्यन्ते बहुशः स्तुताः ॥४०९॥

तदर्थमेव वेदान्तेष्वनेकत्र महर्षिभिः ।
ब्रह्मात्मशब्दावेकत्वस्थापकौ स्तः प्रतिश्रुतौ ॥४१०॥

सांख्ये योगे च तौ शब्दौ न हि व्याख्येयतां गतौ ।
इत्यतः संशयो जातस्तयोरर्थविनिर्णये ॥४११॥

ब्रह्मशब्दः प्रयुक्तोऽयं वेदान्तेषु स्थले स्थले ।
स किं पुंसि प्रधाने वा किं वाऽन्यस्मिन् प्रयुज्यते ॥४१२॥

इत्येतामुत्थितां शङ्कां समाधातुमना ऋषिः ।
निर्ममे ब्रह्मसूत्राणि जीववादावधूतये ॥४१३॥

( अथास्मन्मते चतुःसूत्र्यर्थः )

"अथातो ब्रह्मजिज्ञासे"त्याद्यं सूत्रं स निर्ममौ ।
तदर्थश्च समासेन पुनरत्र निरूप्यते ॥४१४॥

( अथ प्रथमसूत्रार्थः )

सांख्ययोगोक्तसिद्धान्तान् आकलय्य व्यवस्थितान् ।
ब्रह्मशब्दार्थजिज्ञासा कर्तव्या शान्तचेतसा ॥४१५॥

श्रुत्युक्तो ब्रह्मशब्दोऽयं कस्यार्थस्यास्ति लक्षकः ।
इत्याकाङ्क्षोदये प्राह द्वितीयेनास्य लक्षणम् ॥४१६॥

( अथ द्वितीयसूत्रार्थः )

"जन्माद्यस्य यतः" सूत्रं द्वितीयमिह दृश्यते ।
यस्मादेतस्य जन्मादि तद् ब्रह्मेति च लक्ष्यते ॥४१७॥

आऽऽकाशादा तथाऽऽनन्दाद् व्यक्तं यद् दृश्यते जगत् ।
तदेतदिदमा ग्राह्यं षष्ठ्यन्तेन विपश्चिता ॥४१८॥

आविर्भावतिरोभावौ ग्राह्यौ 'जन्मादि' – शब्दतः ।
यतःशब्दाच्च संग्राह्यं कारणद्वितयं परम् ॥४१९॥

यस्माद् याभ्यामिति द्वाभ्यां पदाभ्यामेव सम्भवः ।
परस्य तसिलस्तस्माद् विचिकित्सेयमुद्भवेत् ॥४२०॥

एकमेवात्र निर्दिष्टं 'यतः' शब्देन कारणम् ।
उपादानं निमित्तं चेत्युभे किं वाऽत्र कारणे ॥४२१॥

न निमित्तेन रहितं नोपादानेन वर्जितम् ।
कार्यं किञ्चन लोकेऽस्मिन् दृष्टं वा द्रक्ष्यतेऽथ वा ॥४२२॥

न चाभेदः क्वचिद् दृष्ट उपादाननिमित्तयोः ।
अतो 'यतः' – पदाद् वाच्यं कारणद्वितयं परम् ॥४२३॥

न चैकतरबोधित्वं न चान्यतरबाधिता ।
दृष्टा यतःपदे तस्माल्लक्ष्यं तत् कारणद्वयम् ॥४२४॥

उपादानमपि ब्रह्म निमित्तं ब्रह्म किञ्चन ।
तदेवं ब्रह्मशब्दार्थावुभावेवात्र लक्षितौ ॥४२५॥

ततश्च 'यतः' – इत्यत्र 'याभ्याम्' – इति पदात् परः ।
प्रवृत्तस्तसिलध्येयः पुंस्प्रकृत्यर्थ–[१]बोधदः ॥४२६॥

( अथ तृतीयसूत्रार्थः )

नन्वेमस्य जगतो (महतो) याभ्यां जन्मादि कीर्तितम् ।
तावुभौ ब्रह्मशब्दार्थौ कुतः प्रादुर्बभूवतुः ॥४२७॥

---

१. 'बोधये' 'बोधकः' इति श्रीमद्भारतीकृष्णतीर्थशङ्कराचार्यचरणानां पाठः ।

इत्येतस्याश्च शङ्कायाः समाधाने धृतादरः ।
चकार "शास्त्रयोनित्वादि"ति सूत्रं मुनीश्वरः ॥४२८॥

शास्त्रारावस्य जगतो व्यक्तस्य महतोऽथ वा ।
द्वावेव सर्वशास्त्रेषु प्रदिष्टौ परमर्षिभिः ॥४२९॥

तयोरेकमुपादानमव्यक्ता प्रकृतिस्तु या ।
अधिष्ठानं द्वितीयं च निमित्तं पुरुषस्तु यः ॥४३०॥

प्रकृतिश्च परा शास्त्री शास्ता च पुरुषः परः ।
एतयोरेकशेषेण शास्तारौ तावुभौ स्मृतौ ॥४३१॥

आविर्भावस्य जन्मादेरुत्पत्तेरथ कारणे ।
परमार्थविदः प्रायो योनिशब्दं प्रयुञ्जते ॥४३२॥

सा योनिर्नाम जन्मादेः कारणं किञ्चिदेतयोः ।
न शास्त्रोः परयोरस्ति तेनायोनी उभौ स्मृतौ ॥४३३॥

तयोर्भावोऽस्त्ययोनित्वं तदयोनित्वमेतयोः ।
शास्त्रोरस्तीति जन्यत्वं तयोरेतेन वार्यते ॥४३४॥

( अथ चतुर्थसूत्रार्थः )

नन्वेवमुभयोः शास्त्रोः सत्त्वे सिद्धान्ततः स्थिते ।
एकत्वं ब्रह्मणः कस्माद् वेदान्तेष्ववगम्यते ॥४३५॥

इति चेच्छ्रूयतां बन्धो बृहत्त्वाद् ब्रह्म गीयते ।
बृहत्त्वं लघुसापेक्षं तल्लाघवमपेक्षते ॥४३६॥

आनन्दो ब्रह्मणो रूपं, विज्ञानं तदपेक्षया ।
ब्रह्म, ब्रह्म मनो ज्ञेयं विज्ञानस्याप्यपेक्षया ॥४३७॥

प्राणो ब्रह्म मनोऽपेक्ष्य; ब्रह्मान्नं प्राणलाघवात् ।
बृहती पृथिवी प्रोक्ता ब्रह्माऽन्नादेरपेक्षया ॥४३८॥

पृथिव्यपेक्षया ब्रह्म प्रोक्ता ह्यापो बृहत्त्वतः ।
अपोऽपेक्ष्याभवद् ब्रह्म तेजः स्वस्य बृहत्तया ॥४३९॥

तेजोऽपेक्ष्याभवद् ब्रह्म वायुस्तैजसलाघवात् ।
अपेक्ष्य लाघवं वायोराकाशो ब्रह्म शाश्वतम् ॥४४०॥

अथाऽऽकाशगतं दृष्ट्वा लाघवं परमर्षिभिः ।
प्रधाने परमात्यक्ते बृहत्त्वाद् ब्रह्मतेक्षिता ॥४४१॥

ततोऽपि परमाधारे बृहत्तां पुरुषे स्थिताम् ।
समीक्ष्य ख्याप्यते तस्य परमब्रह्मरूपता ॥४४२॥

यल्लघिष्ठतमं तस्माद् [1]यन्महिष्ठतमं ततः ।
तत्सर्वं ब्रह्मरूपत्वादेकत्वमधिगच्छति ॥४४३॥

सांख्ययोगोक्तमार्गेण किञ्च ब्रह्मणि या द्विता ।
सा सर्वत्रैव वेदान्तेष्वपि ख्याता महर्षिभिः ॥४४४॥

पुंस्प्रकृत्योः समानेऽपि ब्रह्मत्वे तद्विविक्तये ।
परं चैवापरं चेति प्रयुज्येते विशेषणे ॥४४५॥

---

१. " यद् गरिष्टतमं ततः " इति श्रीमद्भारतीकृष्णतीर्थशङ्कराचार्यचरणानां पाठः ॥

परब्रह्मपदेनातो ग्राह्यः सांख्यस्तुतः पुमान् ।
प्रकृतिश्चापरब्रह्मपदेन ग्राह्यतां व्रजेत् ॥४४६॥

(किञ्च) विशेषणानि यान्येव घटितानि नञा गिरा ।
विशिष्यते परं ब्रह्म तैरधिष्ठाननामकम् ॥४४७॥

सहसर्वादिघटितैरितरैश्च विशेषणैः ।
विशिष्यतेऽपरं ब्रह्म प्रधानाव्यक्तनामकम् ॥४४८॥

अतो हि सगुणं ब्रह्म निर्गुणाद् भिद्यतेतराम् ।
सोपाधिकं हि सगुणं निर्गुणं निरुपाधिकम् ॥४४९॥

निरुपाधिकसंसर्गादुपाधिः स्वयमेव वा ।
भिन्नोऽपि लभते ब्रह्मसंज्ञां वेदान्तवारिधौ ॥४५०॥

ब्रह्म मा भूदुपाधिर्वा भेदस्तु स्वीकृतस्तयोः ।
स्वीकृतेनैव भेदेन तयोर्द्वित्वं तु सिध्यति ॥४५१॥

किञ्च व्यासोऽपि भगवान् सद्भावादेतयोर्द्वयोः ।
कार्यात्मनि ब्रह्मशब्दं सामीप्यादूचिवान् स्वयम् ॥४५२॥

तथा हि—" सामीप्यात्तु तद्व्यपदेशः " (४ अ. ३ पा. ९ ब्र. सूत्रम्)

कार्याधिकरणे किञ्च परत्वाच्चापरत्वतः ।
द्वैविध्ये ब्रह्मणः सिद्धे परे मुख्यत्वमाहितम् ॥४५३॥

तथा हि—" परं जैमिनिर्मुख्यत्वाद् " ( ४ अ. ३ पा. १२ ब्र. सू.)

( अथ द्वयोः समन्वयनिरूपणम् )

एवं सिद्धान्ततः सिद्धे द्वित्वेऽपि परमर्षिणा ।
एकत्वश्रवणे हेतुस्तुरीयेण निरूप्यते ॥४५४॥

तुरीयं यदिहाख्यातं सूत्रं 'तत्तु समन्वयात्' ।
तद्गतं तत्पदं त्वास्त एकत्वस्यैव बोधकम् ॥४५५॥

सिद्धे सत्यपि वेदान्ते कारणद्वयभेदतः ।
द्वित्वे, समन्वयादेव तदेकत्वं प्रसिध्यति ॥४५६॥

एवं तुकारः सिद्धार्थग्राहकः सन्नपि स्वयम् ।
[1]एकत्वस्याऽपि संग्राहे साहाय्यमनुतिष्ठति ॥४५७॥

आकाशादेः समस्तस्य भूतस्य तु समन्वयः ।
परेण ब्रह्मणा साक्षान्न केनाऽप्यनुभूयते ॥४५८॥

यावदव्यक्तरूपेण व्यक्तं न प्रविलीयते ।
न तावत्तत् समन्वेतुं परमं ब्रह्म पारयेत् ॥४५९॥

अव्यक्तमेव पुरुषं समन्वेति स्वरूपतः ।
अत एव तदा भेदो नैतयोरवभासते ॥४६०॥

अव्यक्तायामवस्थायामप्येषा प्रकृतिः परा ।
यद्यभिव्यज्यमाना स्यान्नाऽव्यक्तोच्येत सा तदा ॥४६१॥

---

१. " एकत्वसंग्रहेऽप्यत्र " । " एकत्वबोधनेऽप्यत्र " । " एकत्वसाधनेऽप्यत्र " । इति श्रीमद्भारतीकृष्णतीर्थशङ्कराचार्यचरणानां पाठः ॥

यथाऽव्यक्तमधिष्ठानमव्यक्तः पुरुषो यथा ।
तथैवैषाऽनभिव्यक्ता प्रकृतिः प्रोच्यते परा ॥४६२॥

"अयं पुमानियं देवी प्रकृतिः परमाऽव्यया" ।
नैवेत्थमेतयोर्भेदं कर्तुं ना सहसा क्षमः ॥४६३॥

अव्यक्ता प्रकृतिः स्वीयं पुमांसं परमव्ययम् ।
समन्वेति तथा, द्रव्यं यथा तस्य गुणादयः ॥४६४॥

अत एवात्र सिद्धान्ते तावुभावेव केवलौ ।
अव्यक्तावृषिभिः प्रोक्तौ [1]पुरुषः प्रकृतिस्तथा ॥४६५॥

अहेतुकत्वं नित्यत्वं व्यापकत्वमचेष्टता ।
एकत्वमित्यनेकेऽत्र गुणाः सन्त्युभयोः समाः ॥४६६॥

एवं गुणानां सादृश्यात् प्रकृतिः पुरुषं सदा ।
समन्वेतीति वेदान्ते तयोरैक्यं प्रदृश्यते ॥४६७॥

अथ सांख्ये समावस्था प्रकृतेः स्तूयते क्वचित् ।
पुरुषावस्थया साम्यं तत्र ग्राह्यं विपश्चिता ॥४६८॥

याऽवस्था पुरुषस्योक्ता प्रकृतेरपि तादृशी ।
समन्विताऽनुभूतेति तयोः सिद्धः समन्वयः ॥४६९॥

व्यक्ताव्यक्तस्वरूपस्य संघातस्य च किञ्च भोः ।
प्रसिद्धं पुरुषार्थत्वममात्यस्येव धीमतः ॥४७०॥

---

१. "मूलप्रकृतिपूरुषौ" । इति श्रीमद् भा. कृ. ती. शङ्कराचार्यचरणानां पाठः ॥

सम्यङ् मनोऽनुकूलत्वं गत्वाऽमात्यो महीभृतः ।
यथा सर्वान् गुणान् धत्ते प्रकृतिः पौरुषाँस्तथा ॥४७१॥

तामवस्थामिह प्रोचुः पुरुषेण समन्वयम् ।
यस्यां न यान्त्रिकः कोऽपि व्यक्तां प्रकृतिमीक्षते ॥४७२॥

तादृश्यस्यामवस्थायां पुंस्प्रकृत्योः पृथक् स्थितिः ।
नैवावलोक्यते तस्मादुभयोर्ब्रह्मता समा ॥४७३॥

ब्रह्मशब्दः प्रयुक्तोऽयं क्वचित् संगतयोस्तयोः ।
क्वचिन्निमित्तमात्रे च उपादाने तथा क्वचिद् ॥४७४॥

ब्रह्मशब्दः प्रयुक्तोऽयं क्वचिदन्वितयोर्यदि ।
न हि तेनाऽवगन्तव्यो नित्याभेदः पृथक् सतोः ॥४७५॥

समन्वयात्तदेकत्वं प्रतीतमपि शब्दतः ।
शास्त्रोर्निवारयामास तुकारेण मुनीश्वरः ॥४७६॥

( शास्त्रप्रमाणकत्वपक्षखण्डनम् ॥ )

तथात्वेऽप्यन्यथाऽऽचार्याः सूत्रं व्याकुर्वते परे ।
शास्त्रप्रमाणकत्वं च ब्रह्मणः साध्नुवन्ति ते ॥४७७॥

सूत्रेण 'शास्त्रयोनित्वाद्' – इत्येतेनापि ते बुधाः ।
ब्रह्मास्तित्वं प्रमिण्वन्ति शास्त्रमात्रावलम्बनात् ॥४७८॥

किन्तु चारुतरं नैतद् व्याख्यानं प्रतिभाति मे ।
प्रामाण्ये ब्रह्मणः शास्त्रं कथं स्यात् साधनं परम् ॥४७९॥

शास्त्रमेव प्रमाणं स्याद् यदि ब्रह्मनिरूपणे ।
तदेव लक्षितं पूर्वं भवेच्च परिभाषितम् ॥४८०॥

"एतच्छास्त्रमशास्त्रं तद्, ग्राह्यमेतन्न तत्तथा" ।
नैवेदृशो विवेकश्च कृतः सूत्रकृता क्वचित् ॥४८१॥

नैव यावन्निरूप्येत शास्त्ररूपं प्रमापकम् ।
कथं तावत् प्रमेयं तद् ब्रह्मापि प्रमितं भवेत् ॥४८२॥

वेदोपनिषदः किञ्च यदि स्युः शास्त्रसंज्ञिताः ।
नैवाविकलिताङ्गास्ता लभ्यन्ते जगतीतले ॥४८३॥

प्रामाण्ये विकलाङ्गस्य न हि श्रद्धोपजायते ।
भक्ता अपि निरस्यन्ति खण्डितां मूर्तिमर्णवे ॥४८४॥

लब्धो ह्युपनिषद्भागो यदि शास्त्रतयेष्यते ।
न तेन सकलं ब्रह्म पूर्णरूपं निरूप्यते ॥४८५॥

( पूर्वपक्षः )

खण्डिताङ्गेऽपि पितरि पितृत्वं यद्वदव्ययम् ।
अपूर्णाङ्गेऽपि वेदान्ते प्रामाण्यं तद्वदव्ययम् ॥४८६॥

( उत्तरः पक्षः )

इति चेदस्तु पुत्रस्य पिता मान्यो यथा तथा ।
अपुत्रस्य कथंकारं मान्यः स्यादपिता तु यः ॥४८७॥

श्रद्दधानस्य कस्यापि मान्यः सन्नपि खण्डितः ।
वेदोपनिषदां भागः कथं मान्यो भवेत् परैः ॥४८८॥

किञ्च प्रमाणभूतानां शास्त्राणां प्रादुरासने ।
शास्त्राण्येव महद् भूतं कारणं प्राहुरव्ययम् ॥४८९॥

यज्ञाद्दगादिवेदानां जन्म प्राह स्वयं श्रुतिः ।
भूतस्य महतश्चैते वेदा निःश्वसिता मताः ॥४९०॥

किञ्च प्रतिष्ठिता वेदा [1]मनस्येवेति निश्चये ।
कथं ते केवलाः शक्ता भवेयुर्ब्रह्मरूपणे ॥४९१॥

ऋचा यजूंषि सामानि मनस्येव प्रतिष्ठिताः ।
मनः प्राणे, स च प्राणः सत्यमन्ने प्रतिष्ठितः ॥४९२॥

अन्नं भूमावियं भूमिरप्सु नित्यं प्रतिष्ठिता ।
आपस्तेजसि तेजश्च यदा वायौ प्रतिष्ठितम् ॥४९३॥

वायुश्चाकाशरूपे स्यादाकाशश्च परात्मनि ।
तदा कथमिदं ब्रह्म ज्ञेयं स्याच्छास्त्रमात्रतः ॥४९४॥

ब्रह्मस्वरूपचिन्तायां ब्रह्मरूपनिरूपणे ।
शास्त्रं महोपकारीति सर्वथा स्वीकरोम्यहम् ॥४९५॥

---

१. " यस्मिन् ऋचः साम यजूँषि० " ।

किन्तु तेनैव शास्त्रेण केवलेनावगम्यते ।
ब्रह्मेति सूत्रयोर्भाष्यं न [1]मह्यं रोचतेतराम् ॥४९६॥

"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" ।
स्पष्टमेषा श्रुतिः प्राह ब्रह्म वाचामगोचरम् ॥४९७॥

"न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनः" ।
ब्रह्मोपनिषदेषा किं न ब्रूते शास्त्रदुर्गमम् ॥४९८॥

( उपसंहार )

येऽपि पूज्यतमास्तस्मादाचार्याः सूत्रयोर्द्वयोः ।
शास्त्रप्रमाणकत्वेन सार्थकत्वं प्रशासति ॥४९९॥

न ते तथा प्रिया भान्ति यथा ते सांख्यकोविदाः ।
यैः सांख्ययोगसिद्धान्तो ब्रह्मसूत्रैः समर्थितः ॥५००॥

तस्माद् यो ब्रह्मशब्दोऽयं श्रूयते बहुधा श्रुतौ ।
स क्वचित् पुरुषग्राही ग्राहकः प्रकृतेः क्वचित् ॥५०१॥

समन्वयात्तु शब्दोऽयमुभयोरपि वाचकः ।
तस्माद् वैदान्तिकं ब्रह्म पुंस्प्रकृत्यर्थवाचकम् ॥५०२॥

भृगुवल्ल्यां यतःशब्दात् कारणद्वयवर्णनात् ।
तत्र श्रुतो ब्रह्मशब्द उभयोरपि वाचकः ॥५०३॥

---

१. 'तथा मह्यं न रोचते"। इति श्रीमद् भा. कृ. ती. गुरुचरणानां पाठः ॥

"इहत्यो ब्रह्मशब्दस्तु द्वयोरेवास्ति वाचकः ।
समन्वयाद् " – इति प्राह तुरीयेण च सूत्रकृत् ॥५०४॥

अतः परं ब्रह्मशब्दः कुत्र प्रकृतिवाचकः ।
कुत्र वा केवलस्यैष पुरुषस्यास्ति वाचकः ॥५०५॥

इत्येतदग्रिमैः सूत्रैः शनकैः साधयिष्यते ।
अलमेतावता त्वत्र शङ्करः प्रीतिमाप्नुयात् ॥५०६॥
॥११६७॥

---

॥१६७३॥

## —: इति चतुर्थ सूत्रम् :—

इति श्रीमद् ब्रह्मसूत्रभाष्यालोचने प्रथमाऽध्यायस्य प्रथमपादस्य चतुःसूत्री समाप्ता ॥

| | | | | |
|---|---|---|---|---|
| प्रथम सूत्र | श्लोक संख्या | | — | ६१५ |
| द्वितीय सूत्र | ,, | ,, | — | ४०८ |
| तृतीय सूत्र | ,, | ,, | — | १४४ |
| चतुर्थ सूत्र | ,, | ,, | — | ५०६ |
| | | | | १६७३ |

श्रीः ॥

स्वाभिप्रायः प्रियो वा स्याद्,
अप्रियो वा यथासुखम् ।
प्रेष्यतां, क्रियतां किञ्च
कृतज्ञोऽयं निजो जनः ॥

संकेतस्थानम्ः–श्री म. व. उपाध्यायः
डभोइया पोल, वाडी,
बडौदा. ( गुजरात )